चाक्षुषं श्रवणेन श्रूयते श्रावणं मनसा ज्ञायते मानसः दृश्निज्ञानार्थ इति णाधिकारं। णात्। णादित्यधिकारो जादित्यत प्राक्। दृष्टे साम्नि। णात् दृष्टेऽर्थे वैत्यादित्वात् ण स्यात्। यत् दृष्टं तत् साम चेद्भवति। वशिष्ठेन दृष्टं साम वाशिष्ठं वैश्वामित्रम्। णो डिद्वा। अवार्थे विहित. णो डिद्वा स्यात्। विंशत्या दृष्टं साम वैंशं डिति टेर्लोप। पक्षे वैंशत साम। एवं औशनसं साम। यमादिभ्यस्त्वपत्यवत् इति यमेन दृष्टं साम याम्यम् आदित्यम् आग्नेयं कालेयं दैव्य दैवं प्राजापत्यं पाशुपतम् औत्समित्यादि। वामदेवात् यं। णाद्वामदेवशब्दाद् यं स्यात् दृष्टे साम्नि। वामदेवेन दृष्टं साम वामदेव्यं साम। तीयात् णीक। तीयान्तादवार्थे णीक स्यात्। द्वितीयेन दृष्टं साम द्वैतीयीकं तार्त्तीयीकं साम। गोवादङ्कवत्। अपत्यान्तेभ्यो येभ्योऽङ्केऽर्थे येत्या विधेया अवाऽर्थं ते त्या स्युः दृष्टे सामन्यर्थे। औपगवेन दृष्टं साम औपगवकं साम। ग्लुचुकायनिना दृष्टं साम ग्लौचुकायनकं साम वेदेन दृष्टं साम वैदं साम गार्गं साम दाक्षं साम। नाम्नि मक्षिकादेः कृते। णान्मक्षिकादेः कृतेऽर्थे ण. स्यात् समुदायेन संज्ञा चेद्भवति। मक्षिकाभिः कृतं माक्षिकं मधु। मक्षिका पुत्तिका गर्मुत् सरघाः परिकीर्त्तिता। पौत्तिकं गार्मतं सारघं मधुनः संज्ञा। क्षुद्रा भ्रमर वरटा वातपात् ट्र। येभ्यः णभ्य कृतेऽर्थे ट्र स्यात्। क्षुद्राभिः कृतं क्षौद्रं भ्रामरं वारटं वातपं मधु। कुलालादेर्णक.। णात् कुलालादेः कृतेऽर्थे णक स्यात् नाम्नि। कुलालेन कृतं कौलालकम्। कुलालो गिरिकः सेना चण्डाल परिहड्डुकं। कर्मारो वरुडोऽनड्वान् कुम्भकारं उरुस्तया। ब्राह्मणो देवराजश्च श्वपाक परिकीर्त्तित.। निषादश्च कुलालादौ परिशिष्टप्रयोगतः। कृते ग्रन्थे। णात् कृतेऽर्थे वैत्यादित्वात् ण स्यात्, य. कृतः स चेद्ग्रन्थो भवति। वररुचिना कृतो ग्रन्थ. वाररुचिकः प्राभाकर। यमादिषु याम्य आग्नेय प्राजापत्य. कालेय दैव्य औत्स.। भवादित्वात् पाणिनिना कृतो ग्रन्थ. पाणिनीय. ग्रन्थविशेषणत्वात् मूले पाणिनीयमिति क्लीवम् एव काशकृत्स्न काशखमित्यादि। प्रोक्ते। णात् प्रोक्तार्थे वैत्यादित्वात् ण. स्यात्। प्रकर्षेणोक्तं प्रोक्तं व्याख्यातम् अधीतं वा न कृतो ग्रन्थ इत्यनेनावगतत्वात याज्ञवल्क्येन प्रोक्तं याज्ञवल्क्यं गौतमं मूले शार्ववर्म्मिक शर्ववर्म्मणा प्रोक्तमिति वाक्यं काश्यादित्वाण्णिकणिकौ स्त्रियां शाववर्म्मिका शार्ववर्म्मिकीति एवं पाणिनीयम्। पणोऽस्यास्ति पणी तस्यापत्यं ण पाणिन पण्यादित्वात् न नलोप स भवान् पाणिनिः युवत्यः पूज्यत्वेन न्यासकारस्तु पणोऽस्यास्ति पणादित्वादिन. तस्यापत्यम् अत णिः

तेन प्रोक्तं गार्ग्यादिपाठादीय इत्याह। गीवाऽर्थे चीस्तु। आपिशलिना प्रोक्तम् आपिशलम् एव काखेन प्रोक्तं काख याज्ञवल्कम्। यमादेस्तु याम्य प्राजापत्यम् आग्नेय कालेयं पाशुपत औत्समित्यादि। उखतित्तिरि वरतन्तु खण्डिकाणीय ञ्छन्दसि। येभ्य एभ्यश्छन्दसि विषये प्रोक्तार्थे णीय स्यात् कल्प सूत्र छन्दो ब्राह्मणानि तद्विषयाणि इति तद्विषयता। उखेन प्रोक्तं छन्दोऽधीते औखीय तैत्तिरीय वारतन्तवीय खाण्डिकीय। छन्दसीति किम् उखेन प्रोक्ता श्लोका औखा। छगलिनो णेयिन्। घाच्छगलिनः प्रोक्तेऽर्थे छन्दोविषये णेयिन् स्यात्। कलाप्यन्तेवासित्वाणिणोऽपवाद। छगलिना प्रोक्तं छन्दोऽधीते वा छागलेय प्रोक्तात् लुगित्यनेन अध्येत्वेदित्रणस्य लुक् एवमन्यत्र। शौनकादेर्णिन्। घाच्छौनकादेश्छन्दसि विषये प्रोक्तार्थे णिन् स्यात् शौनकेन प्रोक्त छन्दोऽधीते शौनकी स्कान्दी। शौनक स्कन्द शालेय शार्म्येय पुरुषायुष। शापायनो रज्जुकण्ठो देवदर्शन शार्ङ्गर। स्तम्ब वाजसनेयो च नवकारिण सयुती। खाडायनो रज्जुभार कषाय इह कीर्त्तिता। कठशाठौ शौनकादौ षड्भिर्दशपनोषिभि। कठशाठाविति समुदितस्यात्र ग्रहणम्। कठशाठाभ्यां प्रोक्त छन्दोऽधीते काठशाठी केवलात् तु लुक् वक्ष्यति यत्र वृद्धास्तेभ्य ईय अन्येभ्यः णो बाध्यते। कलापिशिष्याकलापिवैशम्पायनशिष्येभ्यः। येभ्यः कलापिशिष्येभ्य कलापिवर्जेभ्यो वैशम्पायनशिष्येभ्यश्छन्दोविषये प्रोक्तेऽर्थे णिन स्यात्। तत्र कलापिशिष्याश्चत्वारो हरिद्रुश्छगलो तथा। उपलस्तुम्बुरुश्चाद्य वैशम्पायनशिष्यका। पलिङ्गकामलाऽऽरुणिक भाण्ड्यकलापिन। श्यामायनोऽपि ऋषभोऽरुणिरेते नव स्मृता। हरिद्रुणा प्रोक्तं छन्दोऽधीते हारिद्रवी एव पालिङ्गी। ननु कलापी वैशम्पायनशिष्य तच्छिष्या हरिद्रादयश्चत्वारो वैशम्पायनशिष्या भवन्ति वैशम्पायनशिष्यद्वारेणैव सिद्ध्यति किं पृथग्ग्रहणेनेति चेत् सत्यम् अत्र कलापिशिष्यग्रहणं साक्षात् शिष्यज्ञापकार्थम्। अन्यथा कठशिष्यस्य खाडायनस्य वैशम्पायनशिष्यत्वात् शौनकादौ पाठोऽनुचितः न च खाडायनशब्दस्तत्र न पठनीय इति वाच्यम अस्य प्रशिष्येभ्यो णिन् प्रसङ्गात्। अकलापिन इति किं कलापिना प्रोक्त छन्दोऽधीते कालापः कलाप्यादित्वान्नलोपनिषेधाभावात् न लोप इकारलोप। कठचरकात् लुक्। घाभ्यामाभ्यां लुक् स्यात्। कठेन प्रोक्त छन्दोऽधीते कठ. चरकः। छन्दसीति किं काठः चारक. श्लोक। ऋषे काश्यपकौशिकाणिन् कल्पे च। घाभ्यामाभ्यां कल्पे छन्दसि च वाच्ये प्रोक्तेऽर्थे णिन् स्यात् ईयस्यापवाद। काश्यपेन प्रोक्त कल्पं छन्दो वाऽधीते काश्यपी कौशिकी। ऋषेरिति किम्

इदानीन्तनकाश्यपगोत्र काश्यप तेन प्रोक्तं कल्पं छन्दो वा अधीते काश्यपीय कौशिकीय इत्यादीय। यज्ञकर्म्मण्यनुष्ठेयविधेर्विधायको ग्रन्थः कल्प। काश्यपेन ऋषिणा प्रोक्त श्लोक काश्यपीय. श्लोक। अपरे इह छन्दो नानुवर्त्तयन्ति। पाराशर्य्यशिलालिभ्यां भिक्षुनटसूत्रयो। घाभ्यामाभ्या क्रमात् भिक्षुनटसूत्रयो र्वाच्ययो प्रोक्तार्थे णिन् स्यात्। पाराशर्य्येण प्रोक्त भिक्षुसूत्रमधीते पाराशरी भिक्षु ईयो बाध्यते। शिलालिना प्रोक्त नटसूत्रमधीते शैलाली नट। कर्म्मन्दकृशाश्वा-भ्यामिन्। घाभ्यामाभ्या क्रमात् भिक्षुनटसूत्रयोर्वाच्ययो प्रोक्तेऽर्थे इन् स्यात्। कर्म्मन्देन प्रोक्त भिक्षुसूत्रमधीते कर्म्मन्दी भिक्षु कृशाश्वेन प्रोक्त नटसूत्रमधीते कृशाश्वी नट भिक्षुनटसूत्रयोरिति किं कार्म्मान्द कार्शाश्व श्लोक। ऋषिप्रोक्तयोर्ब्राह्मण-कल्पयोर्णिन् न याज्ञवल्क्यादे.। याज्ञवल्क्यादिभिन्नात् घात् ऋषिप्रोक्तयोर्ब्राह्मण-कल्पयोर्णिन् स्यात् उपनिषद्भागातिरिक्तवेदव्याख्यान ब्राह्मण शाट्यायनेन प्रोक्त ब्राह्मणमधीते शाट्यायनी पिङ्गेन प्रोक्त कल्प पैङ्गी कल्प। याज्ञवल्क्यादेस्तु याज्ञवल्क. आश्वत्थ शौनभन। याज्ञवल्क्यादिभ्यो वेत्त्यादिविहितणस्य प्रोक्ता-धिकारविहितत्वाभावादध्येतृवेदितृविषयता माभूत् पैङ्गीत्यत्र णिन प्रोक्ताधिकार-विहितत्वेऽपि न स्यात् कल्पग्रहणेन तत्र ऋषि. काश्यपकौशिकाभ्याम् कल्प इति कल्पस्यैव ग्रहणात्। इति घाधिकार। अत्र चवाय साधु चविय यज्ञिय इति मूले लिपिकरप्रमाद:। भात्याभावात्। जादित्यधिकारो ञात् प्राक्। आगते। जादागतेऽर्थे वेत्त्यादिजात् ण स्यात्। मूले मथुराया इत्यादि षे आकारलोप त्रिश्च एव श्रौघ्न इत्यादि। यमादेस्तु यमादागत याम्य प्राजापत्य पाशुपत आग्नेय श्रौत्स। भवादित्वात् गार्गीय काशिक राष्ट्रिय नादेय इत्यादि। इह यन्मुख्यज तस्यैव ग्रहण तेनेह न स्यात् शुघ्नादागत सन् वृक्षमूलादागत इति। आयस्थानेभ्य णिकोऽशुण्डिकादे। जेभ्य आयस्थानवाचिभ्य आगतेऽर्थे णिक स्यात् न तु शुण्डिकादे आय स्वामिग्राह्यो भाग स यस्मिन् उत्पद्यते तदायस्थानम्। शुल्कशालाया आगत: शौल्कशालिक आतरिक: त्वनिर्देश स्वरूपविधेर्निरासार्थ: शुण्डिकाया आगत शौण्डिक.। शुण्डिककृकणतीर्थभूमिपर्णाटणोपलम्। उपदान स्थण्डिलश्च शुण्डिकादौ नवेरिता.। कृकणपर्णयो. पाठ पर्णकृकणाद्भारद्वाज इति ईयस्य बाधनार्थं तीर्थस्य धूमादिपठितस्य णकबाधनार्थं। उदपानस्य उत्सादिपठितस्य ट्णबाधनार्थं अन्येषामायस्थानवाचित्वात् णिकनिषेधार्थं पाठ.। विद्यायोनिसम्बन्धादृत.। विद्याकृतो योनिकृतश्च सम्बन्धो यस्य तस्मादृतो जात्

आगतेऽर्थे ष्णिक. स्यात्। होतुरागत हौतृक मातृक स्वासृक उक प्रत्याहारा-दिकस्य क.। विद्यायोनिसम्बन्धादिति किं सवितुरागत साविव कार्त्तम्। अस्मिन्नर्थे ष्णष्णिकौ स्याताँ पितुरागत पित्र्य पैतृक पूर्ववदिकस्य क। ऋतौ ष्णक:। जाद्विद्यायोनिसम्बन्धादृदन्ताष्णक. स्यात् आगतेऽर्थे। उपाध्यायादागत. औपाध्यायक. पैतामहक. मातामहक. मातुलक। नृहेतुभ्यो मयट्रूप्यौ वा। जेभ्यो नृवाचिभ्यो हेतुवाचिभ्यश्च आगतेऽर्थे मयट् रूप्यश्च स्यात्। देवदत्तादागत देवदत्तमय देवदत्तरूप्य पक्षे देवदत्त हइपक्षे देवदत्तीय एव यज्ञदत्तमय यज्ञ-दत्तरूप्यं यज्ञदत्तीयमित्यादि। हेतुस्तावत् समादागत सममय समरूप्य पक्षे समीय गहादित्वात् ईय. एव विषममय विषमरूप्य विषमीय ब्वनिर्देश स्वरूप-विधिर्निरासार्थ। अपत्यादङ्कवत्। अपत्यान्तेभ्योऽङ्केऽर्थे येभ्यो ये त्या विधेयास्तेभ्य आगतेऽर्थे ते त्या स्यु.। औपगवादागत. औपगवक वैद गार्ग. दाक्ष इत्यादि। प्रभवति। जात् प्रभवत्यर्थे वैत्त्यादित्वात् ष्ण. स्यात्। हिमवतो गङ्गा प्रभवति हैमवती गङ्गा दारदी सिन्धु। यमादिस्तु याम्य प्राजापत्य पाशुपत. आग्नेय औत्स इत्यादि। भवादित्वाद् गाङ्गीय काश्मिक राष्ट्रिय. नादेय इत्यादि। बाल-वायाल्यो विदूरश्च। जात् बालवायात् प्रभवत्यर्थे ष्य' स्यात् पक्षे विदूरादेशश्च बालविदूरादेशश्च। बालवायात् प्रभवति वैदूर्य्यो मणि. परेकदेशिनस्तु वैदूर्य्यं साधयन्ति। धर्म्मादेर्योऽनपेते। जाद्धर्म्मादेरनपेतेऽर्थे य स्यात्। धर्म्मादनपेत धर्म्यं धर्म्मार्थन्यायपथ्यानश्चत्वारोऽत्र प्रकीर्त्तिता। इति जाधिकार। डात्। डादित्यधिकार. त्या प्राक्। पात्रादुद्धृते। डात् पात्रवाचिन उद्धृतेऽर्थे वैत्त्या-दित्वात् ष्ण' स्यात्। पात्र भाजन उद्धृत भुक्तोच्छिष्टम्। शरावेषूद्धृत ओदन: शाराव' कार्पर। पात्रादिति किं पाणावुद्धृतम्। स्थण्डिलाद् व्रतशयितरि। व्रतेन य शेते स व्रतशयिता तस्मिन्। डात् स्थाण्डिलात् वैत्त्यादित्वात् ष्ण' स्यात्। स्थण्डिले व्रतेन शेते स्थाण्डिलो ब्रह्मचारी व्रतमिति शास्त्रतो नियम.। संस्कृते भक्ष्ये। डात् संस्कृतेऽर्थे वैत्त्रादित्वात् ष्ण' स्यात् यत् संस्कृत तत् भक्ष्यं चेत् भवति। भ्रष्टे संस्कृता: भ्राष्ट्रा मुद्गा: पैठरा: पूपा.। खरविषदमभ्यवहार्य्यं भक्ष्य-मिति जयादित्यादिभिरव रूढिकृता खरमभ्यवहार्य्यं भ्रष्टमुद्गादिविषदमभ्यवहार्य्यम् ओदनादि। भक्ष्य इति किं पुष्पपटलेन संस्कृतो मणिगुण.। दध्न. ष्णिको वा तूदश्वित.। डाद्दध्न: संस्कृतेऽर्थे ष्णिक: स्यात् उदश्वितस्तु वा दधि संस्कृत दाधिकं तेन संस्कृतमित्यत्र दधिकृतमेवोत्कर्षाधानम् इह तु द्रव्यान्तरेण लवणादिना

आधारभूत दधि संक्लिश्यत इति भेद। अन्ये तु दधिसस्कृतमित्यर्थविवक्षाया ष्णो मामूदित्येतदर्थमित्याहु। उदश्विति मस्कृतम् औदश्वित्क तादिकस्य क। पक्षे औदश्वितम्। क्षीरात् ष्णेय। डात् क्षीरात् सस्कृते भक्ष्येऽर्थे ष्णेय स्यात्। क्षीरे सस्कृता क्षैरेयी यवागू। शूलोखाभ्या य। डाभ्यामाभ्या सस्कृते भक्ष्येऽर्थे य स्यात्। शूले सस्कृत शूल्यम् उखाया संस्कृतम् उख्यम् मासम्। भवे। डाङ्भवेऽर्थे वेत्त्यादित्वात् ष्ण स्यात्। स्रुघ्ने भव स्रौघ्न माथुर श्रेयसि भव श्रायस। आदायचो णित्ते शिशपेत्यादिना च आत् एव दार्षसव दाविक यमादेस्तु याम्य प्राजापत्य पाशुपत आग्नेय औत्स भवादित्वात् गार्गीय काशिक राष्ट्रिय इत्यादि। अध्यात्मादेष्णिक। डादध्यात्मादे भवेऽर्थे ष्णिक स्यात्। अध्यात्मे भव आध्यात्मिक आध्यात्ममुपज्ञानुपकर्षं स्यादुपनीवि च। अधिभूताधिदैवञ्च स्वग्रामोऽन्तस तथा। ऊर्द्धदेह समानादिर्लोकोत्तरदमेव च। स्वाध्यायचतुरर्थे च कादाचिदिह षोडश। अध्यात्मादाविह प्रोक्ता समानोऽन्ये प्रयोगत। आध्यात्मादय षट्क्रतवा आधिभौतिकम् आधिदैविक सुतगादित्वात् द्वयोर्द्वयोर्वृ्द्धि। ऊर्द्धन्दमशब्द ऊर्द्धसमानार्थ समानादेस्तावत् समानदैशिक समानग्रामिक लोकोत्तरदात्तावत् ऐहलौकिक पारलौकिक दयोर्द्वयोर्वृ्द्धि। चतुरर्थे भव चातुरर्थिक अत्र पाठात् गवाक्षे न लुक् त्यस्य। मूले ऐहिकमिति एव कादाचित्क समाने भव सामानिक अस्याकृतिगणत्वात् शेषे भव शैषिक। वाऽन्त पूर्वात्। डात् कृतवात् अन्तशब्दपूर्वात् भवेऽर्थे ष्णिक स्यात्। अन्तरागारे भव आन्तरगारिक आन्तर्देहिक अन्तशब्दस्याधिकरणप्रसिद्धत्वात् म्यर्थे वस। ग्रामात् पर्य्यनुपूर्वात्। डात् कृतवात् पर्य्यनुपूर्वाद् ग्रामाद्भवेऽर्थे ष्णिक स्यात्। परिग्रामे भव. पारिग्रामिक आनुग्रामिक आभ्यामिति कि मूले ग्रामीण ग्राम्य इति पारादित्वात् ईन दिवादित्वात् य। प्राण्यङ्गदिगादिभ्या यो देवादेस्तु णित्। डेभ्य प्राण्यङ्गवाचिभ्यो दिगादिभ्यश्च भवेऽर्थे य स्यात् णित्तु देवादे। मूले मूर्द्धन्यमिति मूर्द्ध्नि भवमिति वाक्यम् एव हृद्य कण्ठ्य तालव्यमिति। दिगादेस्तावत् दिशि भवं दिश्यम्। दिक्पक्षस्वगपश्यानोऽनीकशाखिवहोगणा। वर्गमित्रान्तराकाशवेशकालादयो मुखम्। जघन मेघयूथाऽन्ता न्यायधार्य्यावुखापि च। मेधोऽनुवंशो वंशोऽय सञ्ज्ञायामुदक मतम्। अत्र ये वृद्धास्तेभ्य ईय. शेषेभ्य ष्णो बाध्यते। मुखजघनयो प्राण्यङ्गवचनत्वेऽपि प्राण्यङ्गभिन्नेऽपि य प्राप्त्यर्थ पाठ। उदके भवा उदक्या रजस्वला नात्र प्रकृतिप्रत्ययार्थेन शब्दवृत्तिः सञ्ज्ञायामिति किम् औदका मत्स्या देवादेस्तावत् देवे

## ४३० । व्यटेर्लोपोऽनाराच्छश्वतोऽच्येऽयौ ।

व्यटे ६।, लोप १।, अनारातश्वत' ६।, अच् ये ७।, अयौ ७। ।

**पौन पुनिकः वाह्यः वाहीकः ।**

---

भव दैव्य यद्यपि यमादित्वात् दैव्यमिति सिद्धति तथापि भवार्थे दैवमिति वार णार्थम् । दैव' पञ्चजनश्चैव गम्भीरोऽथ वसे परे । परिग्रीवानुतीवीपसीवोपत्नणमेव च । पर्य्योष्ठापकालापानुग्रीत परिमुख तथा । परिहन्वनुगङ्गानुमाषानुषयमेव हि । अनुवश परिखलाऽनुपथानुतिलस्तथा । अनुयूपमयो यज्ञे चतुर्मास प्रकीर्त्तितम् । अथानन्तर परे शब्दा परिसोवादय सप्तदश वसे दैवादौ पठ्यन्ते । पूर्व मनुवंश-शब्दोऽवसे । परिमुखमित्यत्र सर्वतो भावार्थ परिशब्दस्य योगविभागादिह वस ग्रहणज्ञापकाद्वा वस. । चतुर्षु मासेषु भव चातुर्मास्यो यज्ञ मूले नादेयमिति नद्यादित्वात् णेय । शालीयमिति वृद्धादीय । शालाया भव इति वाक्य नागर इति णा । अग्रात् येयैया । ढादग्रशब्दात् य इय ईय एते स्युर्भवेऽर्थे । मूले अग्र-मिति अग्रियम् अग्रीय परैकदेशिन तदन्तादपीच्छन्ति तेनान्त्यग्रामित्यादि ॥ ४२९ ॥

व्यस्य टि व्यटि तस्य । आराच्च शश्वत् च आराच्छश्वत् न आराच्छश्वत् अनाराच्छश्वत् तस्य । अश्च यश्च अच्य तस्मिन् । नास्ति युर्यत्र सोऽयुस्तस्मिन् । अव्ययस्य टेर्लोप स्यात् प्रकरणबलात् युभिन्ने तद्धितसंज्ञकेऽचि ये च । न तु आरात् शश्वतो. । पुन पुनर्भवतीति णिके वृद्धौ अनेन टेर्लोपे पौन पुनिक एव वहिर्भव इति णे क्ते टेर्लोपे बाह्य । एव णीके वाहीक' । एव सायं प्रातर्भवतीति सायम्प्रातिक । अयौ किं शयु अह्नय । आरात् शश्वतोस्तु आरात् भवतीति णीये लोपाभावे वक्ष्यमाणेन दान्तत्वनिषेधात् तस्य दकाराभावे आरातीय एव शाश्वतिक' अत्र णिक. । यादृग्जातीयस्य प्रतिषेधो विधिरपि तादृग्जातीयस्येति न्यायादेवाव्ययप्राप्तौ पुनरव्ययस्य ग्रहणं ज्ञापयति कस्यचिदं व्ययस्य क्वचित् टेर्लोपो न स्यात् इति । तेन सुष्ठु इत्यस्य भाव सौष्ठव विकार-मह्नेति णा. । एव शय' कय इत्यादौ टेर्लोपो न स्यात् ॥ ४३० ॥

श्रीरा टी—व्यस्य टि. व्यटि. तस्य आराच्च शश्वच्च तत् न तत् अनाराच्छश्वत् तस्य अश्च यश्च अच्य तस्मिन् नास्ति युर्यस्मिन् अयुस्तस्मिन् आराच्छश्वद्वर्ज्जितस्य व्यस्य टेर्लोपः स्यात् अचि ते युवर्ज्जिते ये च। पौन पुनिक इति पुनः पुनर्भव इति

## ४३१। न दं तसौ त्वस्त्यर्थे च।

न ।१।, द १।, तसौ १॥, तु ।१।, अस्त्यर्थे ७।, च ।१।।

अयावचि ये च ते पूर्व्वं दसंज्ञं न स्यात् तान्तसान्तौ तु अस्त्यर्थे च। आरातीय शाश्वतिकः।

---

वाक्यम् अध्यात्मादेराकृतिगणत्वात् णिक अनेन टिलोप। अयाविति किम् अहयु। बहिषी ग्यणीकौ। डाबहिस्शब्दात् भवेऽर्थे ग्यणीकौ स्याताम्। मूले वाच्य इति पचे वाहीक बहिर्भव इति वाक्यम् अनेन ले पूर्वेण टिलोप ॥ ४३० ॥

तश्च सश्च तसौ। अस्ति इति अर्थो यस्य सोऽ स्य तस्मिन्। प्रत्ययेषु कोर्लुक् त्यचेत्यनेन विसक्तोर्लुकि क्रतेऽपि आतिदेशिक य नत्व तन्निषेधयति यथा त्वच इद त्वाच्य दिशि भव दिश्यम् इत्यादौ दान्तत्वाभावाविरामे न कुटादि। एवम् अनडुह इदम् आनडुह्यम् अत्र न दड् मधुलिह्यमित्यादौ नडगौदुह्यमित्यत्र न घ। उपानह इदम् औपानहमित्यत्र न धड्। तसन्तत्वे तु तडितौ भाव ताडित्व तडित्वानित्यादौ चपो जब् न स्यात्। एव पयसो विकार. पयस्य घृतादिपायस. परमान्नम्। पयोऽस्त्यस्य पयस्वान् पयस्वी तेजस्वी इत्यादौ सस्य विसर्गो न स्यात्। अत्र सकारस्य दान्तत्वनिषेधज्ञापकात् अदान्ते सोर्वि फे इति न स्यात्। अयौ किं शयु अहयु अत्र दान्तत्वाद्धान्ते न इति मस्यानुस्वार। अच्येव किं लङ्मात्र द्विङ्महम् अनडुन्मातम् इत्यादौ दान्तत्वादिरामविहित कार्य्यं स्यादेव। किञ्च नञा निर्दिष्टमनित्यमिति न्यायात् भवदीयमित्यादौ दान्तत्वाज्जब्। एव शय काय इत्यत्रापि मस्यानुस्वार ॥ ४३१ ॥

श्रीरा टी—अच्ये यावित्यनुवर्त्तते। तश्च सश्च तौ अस्ति अर्थो यस्य तस्मिन् तस्मिन्निर्दिष्टे पूर्वस्येति न्यायात् पूर्वदमाचिपतीत्यत आह पूर्वं दसंज्ञ न स्यादिति अत्र कोर्लुकि लुप्तत्वमाश्रित्य दत्वे अनेन निषिध्यते आरातीय इति आराद्भव इति वाक्य हद्दसंज्ञकत्वादीयम् अनेन दत्वनिषेधाय चपोऽवे जब्। क्यङे च। क्ये ड्ये च पूर्वं दसंज्ञ न स्यात्। गामिच्छति गव्यति गौरिवाचरति गवते इत्यादौ दान्तत्वात् वाऽवगोर्दान्ते इति न अवादेश इति, एव तडितमिच्छति तडित्यति न चपोऽजे जब् नमस्यति इत्यत्र न वि। शश्वत णिको वा णकश्च। डाच्छश्वच्छब्दात् णिको वा स्यात् णिकस्य णकश्च मूलं शाश्वतिक इति शश्वत् त्रिषु कालेषु भव.

विद्यमान इत्यर्थ पचे शास्वत न टेर्लोप न चपोऽवे जवश्च। अहि-वस्त्यऽस्ति कुचि-इति कलसीभ्य णेयौ ग्रीवाया णश्च। ङेभ्य एभ्यो भवार्थे णेय स्यात् ग्रीवाया. णेयणौ। अहौ भवम् आहेय वास्तेयम् अस्तीति त्यन्तप्रतिरूपनिपातस्य धनवाचक-स्यास्तिशब्दस्य ग्रहणम् आस्तेय कौचेय दार्त्तेय कालेय ग्रैवेय ग्रैवम्। अङ्गुलि-जिह्वामूलाभ्यामीय। ङाभ्यामाभ्या ईय स्यात् भवेऽर्थे। अङ्गुलौ भव. अङ्गुलीय. जिह्वामूलीय कथ मुखतीय पार्श्वतीय गहादित्वात्। वर्गान्ताच्च। ङाद्वर्गा न्ताद्भवेऽर्थे ईय स्यात। कवर्गे भव कवर्गीय पवर्गीय वर्गान्तादिति कि वर्ग्य' दिगादित्वात् य। अशब्दे योनौ च। ङाद्वर्गान्तात् य ईन ईय एते स्यु भवेऽर्थे। कृष्णवर्गे भव कृष्णवर्गीय कृष्णवर्ग्य कृष्णवर्गीण। शब्दे तु कवर्गीयो वर्ण। मध्यानामीय दिनणोया दस्य नुम् च। ङान्मध्यादेते स्यु भवेऽर्थे दस्य नुम् च म इत्। मध्ये भव मध्यम मध्यमीय माध्यन्दिन मध्यीय। कर्णललाटाभ्या कोऽलङ्कारे। ङाभ्या भवेऽर्थे क स्यात् भूषणार्थे। कर्णे भवोऽलङ्कार' कर्णिका ललाटिका यस्यापवाद। अलङ्कार इति किम् कर्ण्य लालाट्यम्। त्थामाजिना-न्तात् लुक्। ङात् त्थामान्तादजिनान्ताच्च भवे विहितस्य त्यस्य लुक् स्यात्। अश्व-त्थाम्नि भव अश्वत्थामा वृकाजिन सिंहाजिन। ग्रन्थादनेकाच ष्णिक। ङात् ग्रन्थवाचकादनेकाच ष्णिक स्यात् भवेऽर्थे। इष्टौ भव' ऐष्टिक पाशुक। एका-चस्तु सुपि भव सौप तैङ। बह्वचोऽन्तोदात्ताच्च। ङादन्तोदात्ताद् बह्वचो ग्रन्था-द्भवेऽर्थे ष्णिक. स्यात्। षत्वञ्च णत्वञ्च षत्वणत्वे तयोर्भव षात्वणत्विक स स्वरेणा-न्तोदात्त.। अन्तोदात्तादिति कि संहितायां भव साहित प्रादिसस्वरेणाद्युदात्त' पूर्वेणैव सिद्धेऽनन्तोदात्ताद् बह्वच ण एव पृथग्विधानात्। ऋटक् पुरश्चरणाख्या-तभ्य। ऋदन्तात् ऋक्शब्दात् पुरणश्चरणशब्दात् आख्यातशब्दाच्च ङात् ष्णिक: स्यात् भवेऽर्थे। पञ्चसु होतृषु भव' पाञ्चहौतृक ऋचि भव. आर्चिक एकाचत्वात् णस्यापवाद. पौरश्चरणिक' आख्यातिक अनन्तोदात्तत्वात् णस्यापवाद.। ऋषे-रध्याये। ङादृष्यभिधानग्रन्थवाचकात् भवेऽर्थे ष्णिक स्यादध्याये वाच्ये। ऋषि-शब्द उपचारात् ग्रन्थविशेषमभिधत्ते वशिष्ठे भव वाशिष्ठिक. वैश्वामित्रिक अध्याय इति कि वाशिष्ठी ऋक्। यज्ञक्रतुवाचिभ्याम्। ङाभ्या यज्ञवाचिभ्या क्रतुवाचिभ्या च ष्णिक. स्यात् भवार्थे। अनन्तोदात्तार्थ आरम्भ'। नवयज्ञे भव नावयज्ञिक। क्रतुभ्यस्तावत् राजसूयिक:। क्रतुभ्य इत्येव सिद्धे यज्ञग्रहणसोमयागे यथा स्यात् पाञ्चौदनिक पुरोडाशपौरोडाशाभ्यामष्णित्। ङाभ्यामाभ्या ग्रन्थाभ्या भवेऽर्थे

ष्णिकोऽपित् स्यात् । पुरोडाश पिष्टकपिण्ड' तत्र भव पुरोडाशिक । पुरो
डाशिका ऋक् पुरोडाशसंस्कारको मन्त्र पौरोडाश तत्र भव पौरोडाशिक.
पौरोडाशिकी पौरोडाशशब्दादन्तोदात्तात् पूर्वेण ष्णिकविधाने पौरडाशिक पुरो-
डाशिकीति सिद्धे पौरडाशग्रहण पुवद्भावनिषेधाभावार्थमिति । ण ऋगयनादे-
श्छन्दसो यत्र । डाऽऽगयनादेर्ग्रन्थाद्भवेऽर्थे ण स्यात छन्दसन्तु ण्यो ऋगयने भव
आर्गयणम् । ऋगयनविद्यानिगमन्याय छन्दोभाषोत्पत्ति पुनरुक्तम् । छन्दोविचिति
छन्दोविनिति छन्दोमानव्याकरणानि । अङ्गविद्या त्रयीविद्या पदव्याख्यानमेव च ।
छन्दोव्याख्यानोपनिषत्त्विहासवत्सराण्यपि । उपपाती मुहूर्त्तश्च चैवविद्या तथैव च
वास्तुविद्यानिमित्तञ्च निरुक्त परिकीर्त्तितम् । छन्दसि भव छन्दस्यः छान्दसश्च ।
सवत्वात् ष्णिको बाध्यते । सरय्वा णोयन्तोप । सरय्वा भव सारव अत्र यलोप ।
भवे किं सरय्वा जात सारयव । जाते । डादित्येव । तत्राजातेऽर्थे वेत्यादित्वात् ण
स्यात् । भवजातयोरय भेद भवो विद्यमान जात उत्पन्न । स्रुघ्ने जात स्रौघ्न
माथुर । यमादेस्तु याम्य आदित्य आग्नेय कालेय प्राजापत्य पाशुपत औस
इत्यादि । भवादित्वात् गार्गीय शालीय नादेय कावेयक कालिक राष्ट्रिय इत्यादि ।
प्रावृष इक । प्रावृषि जात प्रावृषिक ण्यस्यापवाद । नाम्नि शरदो णक । डाच्छ-
रच्छब्दाणक स्यात् जातेऽर्थे त्यान्तेन सञ्ज्ञा चेत् गम्यते । शरदि जाता शारदकाः
मुद्गा दर्भाश्च । अनाम्नि तु शारदिक यथा प्राप्त मूलाद्रीवस्करप्रदोषपूर्वाह्णापराह्णात्
क । डेभ्य एभ्यो जातेऽर्थे क स्यात । मूले जात मूलक आर्द्रायां जात आर्द्रकः
केऽकास्य इति स्व. अवस्करक प्रदोषक पूर्वाह्णक अपराह्णक अनाम्नि तु यथा
प्राप्तम् । पथ पन्थश्च । के पथ पन्थादेशश्च पथि जात पन्थक । अमावास्यामावस्या-
भ्यामस्य वा । डाभ्यामाभ्या क अस्य वा स्यात् जातेऽर्थे सञ्ज्ञायाम् । अमावास्याया
जात अमावास्यक अमावास्य । पक्षे पन्नदादि ण आमावास्य एवम् अमावस्यक
अमावास्य आमावास्य इति । सिन्धपकराभ्या क णटौ च । डाभ्यामाभ्या जाते-
ऽर्थे क स्यात् णट्रौ च क्रमात् स्याताम् । सिन्धौ जात सिन्धुक णे सैन्धव कच्छा-
दिपाठात् तृततस्थ गीर्णकस्यापवाद । अपकरे जात अपकरक ट्र आपकर ।
एतत् पर्यन्त नाम्नीत्येकदेशिन । तिष्यपुनर्वसुस्वातिहस्ता विशाखाबहुलाभ्यो लुक् ।
एभ्यो जातार्थस्य त्यस्य लुक् स्यात् । तिष्ये जात तिष्य पुनर्वसु स्वाति हस्तः
विशाख बहुला कृत्तिका तासु जात बहुल तस्य लुकि स्त्रो त्यस्य लुक् । नक्ष-
त्रेभ्यो वा । नक्षत्रवाचिभ्यो जातार्थत्यस्य लुक् वा स्यात् । अश्विन्या जात अश्वो

णे अस्य लुकि स्त्रीत्यस्य लुक्। पचे आश्विन अश्वयुक् आश्वयुज' रौहिण: मृग शिरा मार्गशीर्ष अभिजित् आभिजित चित्र चैत्र' श्रवण: श्रावण रेवत रैवत। वत्सशालात्। वत्सशालशब्दाज्जातार्थत्यस्य लुक् वा स्यात्। वत्सशाले जात' वत्स- शाल। फल्गुनी शतभिषग्भ्या टङी। आभ्या जातार्थत्यस्य लुक् वा स्यात् लुकि सति क्रमात् टङी वा स्याताम्। फल्गुन्या जात फल्गुन टपचेऽपि फल्गुन. स्त्रिया फल्गुना फल्गुनी च ग्यै क्ते टित्वादीप् उभयत्यक्तपचे फाल्गुनी शतभिषजि जाता शतभिषा डिति टिलोप लोपे अत आप् डाभावपचे शतभिषक् लुगभाव पचे शतभिषजी। श्रविष्ठाषाढादीयणौ च वा। आभ्या जातार्थत्यस्य लुक् वा स्यात् लुकि ईय' णीयस्य वा। श्रविष्ठाया जात श्रविष्ठ पचे श्राविष्ठीय लुगभावपचे श्राविष्ठ। आषाढाया जात आषाढ पचे आषाढीय' लुगभावपचे आषाढ अन्ये तु आषाढ़े ति कृत्त्वादि तथाच अरोहिणीयोगफल तदेव भवेदाषाढा सहिते च चन्द्र इति वराह इत्याहु। स्थानान्तखरशालगोशालात् लुक् न नित्यम् एभ्यो जाता र्थत्यस्य लुक् नित्य स्यात्। गोस्थाने जात गोस्थानमहिषस्थान खरशाले जात खरशाल गोशाल एभ्य किं स्थाने जात स्थानीय माहिषशाल। स्त्रिया चित्रा- रोहिणीरेवतीभ्य। आभ्यो जातार्थत्यस्य नित्य लुक् स्यात् स्त्रिया वाच्यायाम्। चित्राया जाता चित्रा रोहिणी रेवती कन्या उभयत्र बडादेराकृतिगणत्वादीप्। स्त्रियामिति किं चित्राया जात चैत्र' रौहिण. रैवत। न मघादे। मघादे- जातार्थत्यस्य लुक् न स्यात्। मघासु जात माघ आश्वत्थेषु जात आश्वत्थ प्रोष्ठ- पदासु जात प्रोष्ठपाद सुपञ्चालादित्वात् अन्त्यदस्य त्रि। क्ततलब्धक्रीतेषु। डादि अनुवर्त्तते डादिष्वर्थेषु वेत्त्यादित्वात् ण स्यात्। स्रुघ्ने क्ती लब्ध क्रीतो वा स्रौघ्न माथुर। यमादेस्तु याम्य आदित्य आग्नेय कालेय प्राजापत्य पाशुपत औत्स इत्यादि। भवादित्वात् गार्गीय नादेय. राष्ट्रिय इत्यादि। कुशले। डात् कुशले- ऽर्थे वेत्त्यादित्वात् ण। स्रुघ्ने कुशल स्रौघ्न माथुर'। यमादेस्तु याम्य औत्स इत्यादि भवादित्वात् गार्गीय नादेय राष्ट्रिय इत्यादि। पथ्यादेरक। डात् पथ्यादेरक. स्यात् कुशलार्थे। पथि कुशल पथक.। पन्था' पिच्छिला निचया- श्मद्रादाह्लादनयाकर्षजयै पिशाच'। पथ्यादयश्चेह दशैव सिद्धा भाष्यादिशास्त्राणि बुधैर्विचार्य्य। त्सरुशकुन्यशनिभ्य: क। ङेभ्य. कुशलार्थे क. स्यात्। त्सरौ कुशल त्सरुक. शकुनिक अशनिक.। प्रायभवे। डात् प्रायभवेऽर्थे वेत्त्यादित्वात् ण. स्यात्। स्रुघ्ने प्रायभव: बाहुल्येन भव. स्रौघ्न: माथुर.। यमादेस्तु याम्य. आदित्य,

आग्नेय कालेय प्राजापत्य पाशुपत. औत्स इत्यादि भवादित्वात् गार्गीय' नादेय' राष्ट्रिय इत्यादि। उपनीव्युपजानूपकर्षणात् णिक' डेभ्य एभ्य प्रायभवेऽर्थे णिक स्यात्। उपनीविनि प्रायभव' औपनीविक औपजानुक औरिकस्य क औपकर्षिक। सम्भूते। ङात् सम्भूतेऽर्थे वेत्यादित्वात् ण स्यात् अत्र सम्भूतशब्देन सत्तोत्पत्ती नोच्येते भवजाताभ्यामनुगतार्थत्वात् किन्तु आधाराधेययोरन्यूनानतिरिक्तता। शुघ्ने सम्भूत औघ्न माथुर। यमादेस्तु याम्य आदित्य आग्नेयः कालेय प्राजापत्य. पाशुपत औत्स इत्यादि। भवादित्वात् गार्गीय नादेय' राष्ट्रिय इत्यादि। कोषाद्वस्त्रभेदे णेय। ङात् सम्भूतेऽर्थे वस्त्रविशेषवाच्ये णेय. स्यात्। कोषे सम्भूत कौषेय कृमिकोषोत्थ वस्त्रम्। वस्त्रभेद इति किं कोष कृमि। कालेभ्य साधुपुष्यत्पच्यमानेषु। डेभ्य कालवाचिभ्य एष्वर्थेषु भवादित्वात् यथाविहित त्या स्यु न तु सामान्यत्वे। हेमन्ते साधु पुष्यति पच्यते वा हैमन्तिक हैमन्त हैमन वासन्ती कुन्दलता शारदा शालय प्रावृषेण्या तिला इत्यादि पुष्पविकसने शल शपचौच पाके दधि शिना पच्यमान। उप्ते च। डेभ्य कालवाचिभ्य उप्तेऽर्थे भवादित्वात् यथाविहित त्या स्यु। हेमन्ते उप्यन्ते हैमन्तिका हैमन्ता हैमना यवाः प्रावृषेण्यास्तिला शारदा मुद्गा इत्यादि पृथग्योग उत्तरार्थं। आश्वयुज्या णक। ङादाश्वयुजीशब्दादुप्तेऽर्थे णक स्यात्। आश्वयुज्यामुप्त आश्वयुजको माष आश्वयुजी आश्विनी पौर्णमासी। ग्रीष्मवसन्ताभ्या वा। ङाभ्यामाभ्यामुप्तेऽर्थे णक स्यात् वा। ग्रीष्मे उप्त ग्रैष्मकः वासन्तक। पक्षे ग्रैष्म वासन्त। देयऋणे। डेभ्य कालवाचिभ्यो देयेऽर्थे भवादित्वात् यथाविहित त्या स्यु यद्देय तदृण चेद्भवति। मासे देयमृण मासिकम् आर्द्धमासिक सांवत्सरिक सन्ध्याया देयमृण सान्ध्य पलद्यादित्वात् ण। अश्वत्थकलापियववुषादक। डेभ्य एभ्य कालवाचिभ्यो देयर्णेऽर्थे अकः स्यात् यस्मिन् कालेऽश्वत्थ फलिन मयूरा कलापिन यववुषमुत्पद्यते सकाल साहचर्यादश्वत्थादिभिरुच्यते। अश्वत्थे देयमृणम् अश्वत्थक कलापक यववुषकम्। ग्रीष्मावरसमाभ्यां णित्। ङाभ्यामाभ्या देयर्णेऽर्थे अको णित् स्यात्। ग्रीष्मे देयमृण ग्रैष्मकम् अवरसमायां देयमृणम् आवरसमकम्। अवरसमाशब्देनागामिवत्सर उच्यते। संवत्सराग्रहायणीभ्या णिकश्च। ङाभ्यामाभ्या देयर्णेऽर्थे णक णिकौ स्याताम्। संवत्सरे देयमृण सांवत्सरक सांवत्सरिकम् आग्रहायणकम् आग्रहायणिकम्। ननु वेति कृते सिद्धे णकाभावपक्षे कालवाचित्वात् णिको भविष्यति किमिह णिकविधानेनेति चेत् सत्य पलद्यादौ फलपर्वणोः संवत्सरशब्दस्य पाठात्

देयर्णत्वेन काले विवक्षिते णिक बाधित्वा ण प्रवर्त्तते तद्बाधनाय इदमिति । व्यवहरति मृगे । कालेभ्य इति प्रवर्त्तते डेभ्य कालवाचिभ्यो व्यवहरत्यर्थे भवादिनात् यद्यविहित त्या स्यु यो व्यवहरन् स मृगश्चेद्भवति । निशाया व्यवहरन् मृग नैशिको नैश प्रादोषिक प्रादोष हैमन्तिक हैमन्त हैमन प्रावृषेय इत्यादि । मृग इति कि निशाया व्यवहरन्नर । कालेभ्य इति कि वने व्यवहरति मृग । णिके नियुक्ते । डेर्डान्नियुक्तेऽर्थे णिक स्यात् । द्वारे नियुक्तो दौवारिक धर्म्म नियुक्त धार्म्मिक । अगारान्तादिक । डादगारान्तान्नियुक्तेऽर्थे इक स्यात् । देवागारे नियुक्त देवागारिक । निषिद्धदेशकालाभ्यामधीते णिक । डाभ्या देशकालाभ्यामधीतेऽर्थे णिक स्यात । चतुष्पथेऽधीते चातुष्पथिक चातुर्दशिक । कठिनान्त प्रस्थानसस्थानेभ्यो व्यवहरति । डेभ्य एभ्यो व्यवहरत्यर्थे णिक स्यात् । वशकठिने व्यवहरति वांशकठिनिक प्रास्थानिक, सास्थानिक । वसतिनिकटात् षिकस्त्वावसथात् । डात् निकटशब्दात् वसत्यर्थे णिक स्यात् आवसथात्तु षिक । निकटे वसति नैकटिक आवसथिको आवसथिकभार्य्ये प वद्भाव । पृथिवीसर्वभूमिभ्याम् ट्ष्णौ विदिते । डाभ्यामाभ्यामेतौ क्रमात् स्याताम् । पृथिव्या विदित पार्थिव सर्वभूमौ विदित सार्वभौम सुभगादित्वात् द्वयोर्वृद्धि । लोकसर्वलोकाभ्या णिक प्रसिद्धे च । प्रसिद्धे विदिते चार्थे णिक स्यात् । लोके । लोके प्रसिद्धो विदितो वा लौकिक सार्वलौकिक द्वयोर्द्वयोर्वृद्धि । कालेभ्यो दीयते कार्य्ये वा भववत् । डेभ्य कालवाचिभ्यो दीयते कार्य्ये वाऽर्थे भववत् त्या स्यु । मासे दीयते कार्य्यं वा मासिकम् आर्द्धमासिक सांवत्सरिक प्रावृषेण्य हैमन्त हैमनमित्यादि । व्युष्टादे ण । डाद्व्युष्टादेर्दीयते कार्य्ये वाऽर्थे ण स्यात् व्युष्टे दीयते कार्य्यं वा वैयुष्टम् । व्युष्टसङ्घातनित्योपवासतीर्थप्रवेशन प्रवालनिष्क्रमौ पीलमूलाग्निपदमित्यपि । य साधौ । डात् साधावर्थे य स्यात् । सामनि साधु निपुणो योग्यो वा सामन्य । एव ब्रह्मण्य कर्म्मण्य । प्रतिजनादेरीन । डात् प्रतिजनादेरीन स्यात् साधावर्थे । प्रतिजन साधु प्रतिजनीन । प्रति पञ्च सहविश्वसर्वादिजनसयुगौ । परपूर्वकुलामुष्य कुल सत्यपरायुगम् । इद युगमिह प्रोक्ता दश एकाधिका बुधै । जन जन प्रति प्रतिजन वीप्साया वस प्रतिसयुगीनमित्यादि । अमुष्य कुलमिति न नीतास्मकुलस्य । कुले न ष्य लुक् । अमुष्य कुलीन. । भक्तास षरिषदो ण्यश्च । डात् भक्तशब्दात् साधावर्थे ण. स्यात् परिषदस्तु ण्यश्च । भक्ते साधु भाक्त पारिषद पारिषद्य: । अपरे तु परिषच्छब्दात् ण नेच्छन्ति । कथादे णिक: । डात् कथादे.

## ४३२ । अह्नोऽह्नोऽनीने ।

अह्न ६।, अह्नः १।, अनीने ७। ।

**आह्निकम् । ईने तु द्व्यह्नीनः ।**

**सुपाञ्चालकः अर्द्धपाञ्चालकः ।**

**दौवारिक' सौवर सौव सौवस्तिकः सौवादुम्दवं वैयल्कसं श्वौव श्वौवनं स्फैयकृत सौव सौवाध्यायिकं सौवग्रामिकम् । नैयग्रोधम् । एकेति किं न्यग्रोधमूलिकम् । श्वौवापद श्वापदं, नैयङ्कवम् नाङ्कवम् । श्वागणिकम् ।**

---

साधावर्थे णिक स्यात् । कथाया साधु काथिक । कथा वितण्डाजनवादबाधी गुणी गणी वेणु गुडी निवास । सजुपवासौ वसुधा च वृत्ति प्रवासमासौदनमग्र हाय । विक्रयेच्छ कृष्णविदायुवेदौ निसुरा तथा । कुल्माषपूपसग्रामसङ्घाता पञ्च-विंशति । पथ्यादे ण्येय । ङात् पथ्यादे साधावर्थे ण्येय स्यात् । पथि साधु पाथेय स्वापतेय धनम् । पन्थाश्च स्वपतिश्चैवातिथिर्वसतिरित्यपि । सतीर्थ्या यो वासिनि । ङात् वासिन्यर्थे सतीर्थशब्दात् य स्यात् । सती वासी सतीर्थ्य एक गुरु-समीपे यस्य वासोऽस्ति स इत्यर्थ । सोदरसमानोदराच्छयितरि । ङाभ्यामाभ्या शयि-तर्य्यर्थे य स्यात् । सोदरे शयिता सोदर्य्य समानोदर्य्य । सगर्भसयूथाभ्यामनुज सहचारिणो । ङाभ्यामाभ्यां क्रमादनयोरर्थयोर्य स्यात् । समानो गर्भ सगर्भ तत्रानुज सगर्भ्य समान यूथ सयूथ तत्र सहचारी सयूथ्य । अन्ये तु छान्दस-मित्यप्याहु. ॥ ४३१ ॥

न ईनोऽनीन तस्मिन् । अह्नन्शब्दस्य अह्न स्यादचि ये च तद्धिते न तु ईने । त्वन्तसम्बन्धत्वादत्यर्थे इत्यस्य नानुवृत्ति । अह्नि भवम् आह्निकम् अत णिके अह्ना-देशे वृद्धि । ईने तु द्वयोरह्नोर्भवतीति तद्धितार्थविषये द्विगौ ईने कृते अह्नादेश-निषेधात् न्वोर्लोपौ ताविति नलोपे ययोरित्यकारलोपे द्व्यह्नीन । सुपञ्चालादी-नुदाहरति । सुपञ्चाले भव सुपाञ्चालक अर्द्धपञ्चाले भव अर्द्धपाञ्चालक इत्युभयत्र कणि कृते सुपञ्चालादित्वात् परपदस्य वृद्धि । सुपञ्चालादिस्तु । सुपञ्चाल अर्द्ध-पञ्चाल सर्वपञ्चाल पूर्वपञ्चाल दक्षिणपञ्चाल उत्तरपञ्चाल गुरु लघु सहृत परार्थ

पितृपितामह वातपित्त वातश्लेष्म एकपुरुष पूर्वपुरुष पूर्वहायन अपरहायन पूर्वेषु कामशम पूर्वक्लश मृत्तिका पूर्वपाटलिपुत्रक पूर्वकान्यकुब्जक द्विसंवत्सर विसप्तति द्विवर्ष द्विकुडव द्विनिष्क त्रिसुवर्ण प्रोष्ठपद भाद्रपद इत्यादि। द्विकुलिजी वा द्विकुलिजिक द्विकौलिजिकम्। द्वारादीनुदाहरति द्वारि नियुक्त दौवारिक अत्र णिके द्वारस्वरेत्यादिना वस्य उमि तस्य वृद्धि। द्वार इति अदन्तस्य ग्रहणात् रेफा-न्तस्य न स्यात् तेन द्वारि नियुक्त द्वारिक अत्र उम् न स्यात्। एव स्वरे भव सौवरम् अत्र ण। स्व' स्वर्गे भव सौवम् अत्र णे व्यटेरिति टेर्लोप। दुर्गसिंहस्तु स्वर्गमनमाह इत्यत्रापि सौवर्गमनिकमित्याह। स्वस्तीत्याह सौवस्तिक णिके टेर्लोप'। स्वादुमृदी-रपत्य सौवादुमृदव अत्र शैषत्वात् ण। एव स्वादुमृदुना कृत सौवादुमृदवम् इति वा। वियतोऽर्क व्यर्क, तं स्यतीति व्यल्कस कपिलिकादित्वात् रैफस्य लत्वम्। वाल्कसो भव वैयल्कसम् अत्र ण' आयच स्थाने जातत्वादेव इमि सिद्धे अस्य द्वारादौ पाठोऽव्युत्पत्तिपक्षे इम्प्राप्त्यर्थ.। श्व परदिने भव शौवम् अत्र णे टेर्लोप। शौवस्तिकत्वं विभवा न येषा व्रजन्ति तेषा दयसे न कस्मादिति भट्टौ। शौवस्तिकत्व-मिति श्व परदिन तेकते गच्छतीति श्वस्तिक कृगृत्ता प्रीति क। श्वस्तिक एव शौवस्तिक' स्वार्थे णे उमि वृद्धि। तस्य भाव शौवस्तिकत्वम्। शुनि भव शौवन अत्र णे कृते श्वयुवमघोनामित्यत्र अने इत्युक्तेर्वस्य उत्वाभावे मनवञ्जोनिति न लोप-निषेध। स्फ्यकृतस्येद स्फैयकृत विकारसङ्घेति ण। स्वस्येद सौव विकार-सङ्घेति ण स्वश्चासावध्यायश्चेति स्वाध्याय, तेन जीवति तत्र भवो वा सौवाध्यायिक' अत्र णिक। स्वग्रामे भव सौवग्रामिकम् अत्र णिक स्वग्रहणेनेष्टसिद्धौ स्वाध्याय-स्वग्रामयोर्ग्रहणम् अन्यशब्दान्तरस्य निषेधार्थम्। तेन स्वशब्दस्येद स्वाशब्दम् अत्र ण स्वोदर पूरयति स्वौदरिक अत्र णिक इत्यादौ उम् न स्यात्। न्यग्रोधस्येदं नैयग्रोधम् अत्र विकारसङ्घेति ण। एक इति किं न्यग्रोधमूले भव न्यग्रोध-मूलिकम्। श्वापदस्येदं शौवापदं श्वापदम्। न्यङ्कोरिद नैयङ्कव न्याङ्कवम् उभयत्र विकारसङ्घेति णे पक्षे उमि इमि च कृते वृद्धिः। नत्विति श्वादेरिति शुना गण श्वगण. श्वगणस्येदं श्वागणिकम् अत्र णिके उम्निषेध इकारादाविति किं श्वदंष्ट्राया भव शौवादंष्ट्री मणि अत्राकारस्य दीर्घो मनीषादित्वात्। अन्यान्यप्युदा-हरामि। कर्मणः कर्त्तरि। पन्थाम सततं गच्छति पथिकः अत्राणित् कण्। परिपार्श्वं वर्त्तते पारिपार्श्विक. क्रियाविशेषणस्य कर्मत्वम् अत्र णिके वृद्धिः वद-राणि चिनोति वादरिकः। समाजं समवैति सामाजिक. शब्द करोति शाब्दिकः

वैयाकरणे रूढ'। मृगादेर्हन्तीत्यर्थे णिक। मृग हन्ति मार्गिक' एवं पाक्षिक' मात्सिक' शाकुनिक ऐणिक शौकरिक मायूरिक। द्विगुणं गृह्णाति द्वैगुणिक एवं त्रैगुणिक वृधुषी धान्यादेर्वृद्धि ता गृह्णाति वार्धुषिक। धर्मं चरतीति धार्म्मिक ललाट पश्यति लालाटिक लालाटिक' प्रभोर्भालदर्शी कार्य्याचमश्च य इत्यमर.। कुक्कुटी दाम्भिकचेष्टा तामाचरति कौक्कुटिक। योजनादेस्त गच्छतीत्यर्थे णिक। योजन गच्छतीति यौजनिक' एवं पारदारिक गौरुतल्पिक सुस्नाताम् पृच्छति सौस्नातिक दिष्टमाह दैष्टिक अपूपम् करोति आपूपिक' कन्दु' करोति कान्दविक' अचैर्दीव्यति आचिक' अव दिव करणस्य कर्म्मत्वम् एषु णिक। सर्वपथ व्याप्नोति सर्वपथीना सेना एव सर्वाङ्गीन संयोग पादाग्र प्रपदम् आप्रपद व्याप्नोति आप्रपदीन वस्त्रम् एव सवपत्रीण सर्वकर्मीण सर्वकर्म्मद्च सर्वान्न भुङ्क्ते सर्वान्नीनो भिक्षु। दण्डादेस्तदर्हेऽणित् ण्य। दण्डमर्हति दण्ड्य। दण्डादिस्तु। दण्ड वध धन मुषल मधुपर्क कशा अर्घ मेधा मेघ उदक वंश युग शभम्। १३। दक्षिणादेरणित् णीयश्च। दक्षिणामर्हति दक्षिण्य दक्षणीय'। दक्षिणादिस्तु दक्षिणा कडङ्गर स्थाली विल इत्यादि। अत्यन्त भृशं गच्छतीति अत्यन्तीन गामनुचरतीति अनुगवीनो गोप: अमित्रस्य अभिमुखम् अभ्यमित्र तद्ग-च्छतीति अभ्यमित्र अभ्यमित्रीय अभ्यमित्रीण एषु अणित्त्वान्न वृद्धि.। युगरथ-प्रासङ्गेभ्यस्तद्वहतीत्यर्थेऽणित् ण्य युग वहति युग्य एव रथ्य प्रासङ्ग्य। करणात् कर्म्मणि। नावा तार्य्य नाव्य जल विषेण बध्य विष्य एव मुषल्य तुलया सम्मित तुल्यम् एषु अणित् ण्य चक्षुषा गृह्य चाक्षुष रूपम्। एव श्रावण शब्द कुसुम्भेन रक्त कौसुम्भम् एवं हारिद्रम् एषु ण दध्ना ससृष्टं दाधिकम् एव मारीचिकम् उभयत्र णिक। शतेन क्रीत शातिक अत्राणित् णिक। द्विशौ-र्पिक सुपञ्चालादित्वादन्त्यपदवृद्धि। एव कार्षापणिक: प्रास्थिक उभयत णिक'। सप्तभि: पदै. प्राप्य साप्तपदीन सख्यम् अत्र णीन। करणात् कर्त्तरि। तेन चरतीत्यर्थे पर्णादेरणित् णिक। पर्णेण चरति पार्णिक। पर्णादिस्तु। पर्ण अश्वत्थ जाल व्यास व्याल आकर्ष इत्यादि। योऽनियतवृत्ति. सन् शरीरमुपास्य जीवति स व्रात: तस्य कर्म्म व्रातम् इदमर्थे ण। तेन जीवति व्रातीन अत्र णीन'। अश्वमेधेन ब्रह्महत्यां तरति आश्वमेधिकी ब्रह्महत्यायो काण्डप्लवेन नदीं तरति काण्डप्लविकी नद्या. उभयत्र सम्बन्धे षष्ठी शकटेन तरति शाकटिक एव दाण्डिक; शाङ्गवेधिक. घाटिक: एषु णिक: एव गोपुच्छिक. प्राविक: उभयत्राणित्

णिक'। चन्दनेन शोभते चान्दनिकम् एव कार्य्यवेष्टनिकम् उभयत्र णिकः भूम्या जीवति भूमिक अत अणित् णिक एव ताम्बूलिक' तैलिक. तेन जीवतीत्यर्थे वेतनादे णिक। वेतनेन जीवति वैतनिक। वेतनादिस्तु वेतन वाह मृदङ्ग पणव मुरज जाल वेश प्रेवण उपास्ति मुख शय्या शक्ति उपनिषद् स्थिग पद उपस्थान धनुर्दण्ड वसु क्रम विक्रम क्रय विक्रय इत्यादि। अधिकरणात् कर्म्मणि। उदूखले चुण्णा औदूखलास्तण्डुला। दृशदि पिष्टा दार्शदा' शक्तव। अधिकरणात् कर्त्तरि। कर्म्मणि साधु' कर्म्मण्य एव पित्र्य वने भवो वन्य। कण्ठे भव कण्ठ्य' एव तालव्य मूर्द्धन्य. दन्त्य ओष्ठ्य एभ्योऽणित् ण्य'। पन्थान वर्जयित्वा इत्यर्थे परिपन्थ मनीषादित्वान्निपात्यम्। परिपन्थे तिष्ठतीति पारिपन्थिकश्चौर. परलोके भव पारलौकिकम् एव ऐहलौकिकम्। निकटे वसति नैकटिक. एव वार्क्षमूलिक आवसथिक एषु णिक। अद्य श्वो वा प्रसूते अद्यश्वीना गौ अद्य श्वो वा भवति अद्यश्वीन मरणम् उभयत्र ईने व्यटेर्लोप अध्वनि कुशल अध्वनीन. उभयत्राणित्वान्न वृद्धि। कानीनाद्या निपात्यन्ते। कन्याया अपत्य कानीन ह्यो गोदोहाद्भवति हैयङ्गवीन घृत हैयङ्गवमित्येके। पराश्च परतराश्च अनुभवतीति परम्परीण पराश्च अपराश्च अनुभवतीति परावरीण पुत्रश्च पौत्रश्च अनुभवति पुत्रपौत्रीण समां समां प्रसूते समांसमीना गौ। आश्रितास्तता गावो यत्र तत् आश्रित गवीन वन देविकाया भव दाविक. सरय्वा भव सारव गोदानपश्चात् कर्म्म करोति आगवीन कर्म्मकर। परलोके कर्म्मफलमस्तीत्याह आस्तिक'। तन्नास्तीत्याह नास्तिक इत्यादि ॥ ४३२ ॥

श्रीरा टी—न ईन अनीन तस्मिन्। तथाचाहन् इत्यस्य ईनभिन्ने ताचि यभिन्ने त्व ये च अह्न इत्यादेश स्यात्। आह्निकमिति अह्नि भवतीति वाक्यम् कालवाचित्वात् णिकेऽनेनाह्नादेश। द्व्यहीन इति द्वे अहनी अधीष्टो भूतो भावी वा इत्यर्थे वा द्व्यह्न सवत्सरादित्वादीन सान्तविधेरनित्यत्वात् यत्याभावेन सर्वैकदेशेत्यादिना नाह्नादेश। अथवा अत्र ईनवर्जनज्ञापकात् यत्ये कृतेऽपि नाह्नादेश। सुपञ्चालादेरन्त्यस्य दस्य त्रि दर्शयति सुपाञ्चालक इति शोभनाश्च ते पाञ्चालाश्चेति सुपञ्चालास्तत्र भव इत्यर्थे व्वविषयादद्वह्वाच्चेति णक। पञ्चालानाम् अर्द्धम् अर्द्धपञ्चालास्तत्र भव. अर्द्धपाञ्चालक' पूर्व्ववण्णक। पञ्चालादि प्रागुक्त। द्वारस्वरेत्यादिसूत्रस्योदाहरणमाह दौवारिकः इत्यादि। द्वारे नियुक्त इत्यर्थे णिके वस्य उम् पश्चाद त्रिः। स्व रमधिकृत्य कृतो ग्रन्थः सौवरः स्व. स्वर्गे भव'

## ५३३ । विकारसङ्घभावेदं हितस्वार्थादौ ।

विकार स्वार्थादौ ७। ।

एष्वर्थेषु च ते त्याः स्युः । हेम्नो विकारः हैमं. आग्न्यः आग्नेयः, भिक्षाणां समूहः भैक्षम् आङ्गं गाणिक्यं राजकं, गुरोर्भाव. गौरवं यौवनं साम्यं वैरूप्यं राज्यं सौहार्दं, विष्णोरिदं वैष्णवं त्वदीयं माघवनं शौवनम् ।

---

सौवं व्यटेरिति णे टेर्लोपे स्वस्ति वक्ष्यति सौवस्तिक. स्वस्ति यथा स्यात्तथा वक्ति सौवस्तिकः प्रभूतादित्वात् णिकः इत्यन्ये । स्वादुमृदुनि सस्कृतं सौवादुमृदवं भक्तं सस्कृते भक्ष्येऽर्थे वेस्यादित्वात् णः । व्यल्कसोऽव्युत्पन्नस्तत्र भवं वैयल्कसं अन्ये द्वारादौ न पठन्ति तेषां मते विगतोऽर्को व्यर्कस्तं स्यति व्यर्कसः कपिलिकादित्वात् रस्य लः तत्र भवं वैयल्कसं इति आद्यच स्थानजातत्वात् यस्य इम् पश्चाद्वि । श्वी भवं शौवस्तिकम् अत्र शौवमिति पाठो लिपिकरप्रमादः । कालवाचित्वात् णिकः तस्य तम् । तथाच शौवस्तिकत्व विभवा न येषां व्रजन्ति ऋषा दयमेन कस्मादिति भट्टि । शुनि भवं शौवनं मांसं अविकारर्थे नलोपाभावः । स्फ्यकृते भवं स्फैयकृतं स्फ्य खादिरं खड्गस्तेन कृतमिति वौसं स्वे धने भवं सौवं स्वपरदेवराजजनस्येत्यत्रात्मार्थस्वशब्दस्य ग्रहणात् इह स्वस्य धनार्थत्वात् वामनधर्मदासौ तु आत्मार्थस्वशब्दस्यापि इदमर्थे सौवमित्यप्याहतुः । स्वाध्याये भवं सौवाध्यायिकं वेदाध्ययनम् । स्वग्रामे भवं सौवग्रामिकम् । आध्यात्मध्यात्मादित्वात् णिकः । यद्यपि स्वाध्यायस्वग्रामशब्दयोः स्वशब्दस्य ग्रहणेनैव सिद्ध्यति तथापि अन्यत्रादिस्थितस्वशब्दस्य न स्यादित्येतदर्थं पृथगनयोर्ग्रहणम् । दुर्गटीकायान्तु स्वग्रामं इत्यत्र स्वर्गमनमित्युक्त्वा स्वर्गमनं वक्तीत्यर्थे सौवर्गमनिक इति वर्त्तते । न्यग्रोधे जातं नैयग्रोधस्त्रमसः । न्यग्रोधमूलिकमिति न्यग्रोधमूलेन संसृष्टम् इत्यर्थे णिकः । शुन इव पदमस्य श्वापदः शुनोऽदन्तादावितिर्घः तत्र भवं शौवापदं पक्षे श्वापदमिति पत्त्यादेराकृतिगणत्वात् णः अथवा क्वचिदपवादविषये उत्सर्गोऽपि निविशते इति न्यायात् णः । न्यङ्कौ भवं नैयङ्कवं न्याङ्कवं श्वागणिकमिति श्वगणेन चरति श्वगणान्नवेति षिकणिकौ णिकपक्षे इकारादौ णित्ते न वस्य उम् । इकारादिभिन्ने तु श्वदंष्ट्राया भवं. शौवादंष्ट्र इत्यादौ स्यादेव । अत्रापि शुनोऽदन्तादावितिर्घः । अत्र

স্যাদি. অপূর্বস্যৈব ইকারাদৌ তে বস্য ডম্ নিষেধাৎ হারাদীনাং সর্বেষাং ণিত্বে সামান্য-থবয়োরিমুনৌ স্যাতামিত্যর্থঃ অতএব ন্যগ্রোধস্যৈকেতি বিশেষণস্য সার্থকত্বমিতি। তথা ইঁগ্রদি পিষ্টা জুষাশ্চ দার্শদা মাষা ইত্যাদি ॥ ৪৩২ ॥

স্বস্য আত্মনোঽর্থোঽভিধেয়ঃ স্বার্থ। স্বার্থ আদির্যস্য স স্বার্থাদি বিকারশ্চ সঙ্ঘশ্চ ভাবশ্চ ইদম্ চ হিতঞ্চ স্বার্থাদিশ্চেতি তস্মিন্। অবস্থিতপদার্থস্য প্রকারান্তরাপত্তির্বিকার সঙ্ঘ সমূহ ভাবোঽসাধারণধর্ম্ম। যথা ঘটস্য ঘটত্বম্ ইদমিতি সম্বন্ধোপলক্ষণম্। হিতমিষ্টসাধনম্। স্বার্থোঽর্থানতিরিক্ত.। তে একাদশ প্রত্যয়া এষ্বর্থেষু চ স্যু। অত্রাপি অস্যা প্রকৃতেঃ অস্মিন্নর্থে অয় প্রত্যয় সেৎ অণিৎ বা স্যাৎ এতৎ সর্বং প্রয়োগানুসারেণৈব বোধ্যম্। যথা হেম্নো বিকার হৈমঃ অনেন ণো বৃদ্ধৌ ন্বোর্লোপীতাবিতি ন লোপে যয়োরিত্যকারলোপ। এবম্ অপাম্ আপ্য. অত ণ্য এবম্ অগ্নে আগ্নেয়. অত ণেয। ভিক্ষাণা সমূহ ভৈক্ষম্ অত ণ এবম্ অঙ্গাম্ আঙ্গম্ অত ণে অঙ্গৌ অঙ্গ ইত্যাঙ্গাদেশ। এব গণিকানা গাণিক্যম্ অত ণ্য এব রাজ্ঞা রাজকম্ অত কণ্ গুরোর্ভাব গৌরবম্ অত ণ এব যূনা যৌবনম্ অত ণে স্বযুবমঘোনামিত্যত্র অতে ইত্যুক্তের্বকারস্য উত্ব ন স্যাৎ। অবিকারণে ন লোপাভাব এব সমস্য সাম্য বিরূপস্য বৈরূপ্যম উভয়ত্র ণ্য। এব রাজ্ঞঃ রাজ্যম্ অত্র ণ্য ন্বোর্লোপীতাবিতি নলোপে যয়োরিত্যকারলোপ। এব সুভগস্য সৌভাগ্যম্ অত্র ণ্য সুহৃদ সৌহার্দম্ অত ণ.। উভয়ত্র সুভগাদিত্বাৎ উভয়পদস্য বৃদ্ধি। সুভগাদিস্তু। সুভগ দুর্ভগ অনুহোড অনুসংবৎসর পুষ্করসদ অন্তর্হত সূত্র নড উদক সভ্য অগার বেণু বধ্যোগ কুরুকাত কুরুপঞ্চাল ইহলোক পরলোক অধিদেব অধিভূত প্রযোগ অসিহত সর্বলোক সর্বপুরুষ শতকুম্ভ পরস্ত্রী অনুশত সর্বভূমি অভিগম চতুর্বিদ্যা সুহৃদ শক্তসিন্ধু যুগ্ম নগর অগ্নি মরুত রাজপুরুষ অস্য হেতি অসহত্য ইত্যাদি। ৩৩। বিষ্ণোরিদ বৈষ্ণবম্ অত ণ ন্বোর্লোপীতাবিতি উকারস্য ওকারে অব্। এব তব ত্বদীয়ম্ ইত্যাদৌ অণিৎ ণীয.। এব মঘোন মাঘবন পক্ষে তুড়ি মাঘবত শুন. শৌবনম্ উভয়ত্র ণ স্বযুবমঘোনামিত্যত্র অতে ইত্যুক্তের্বকারস্য ন উকার. অবিকারণে ন লোপনিষেধ ॥ ৪৩৩ ॥

গোরা টী—বিকারশ্চ সঙ্ঘশ্চ ভাবশ্চ ইদঞ্চ হিতঞ্চ স্বার্থশ্চ তে আদয়ো যস্য স তস্মিন্। আদিশব্দঃ প্রত্যেকমভিসম্বধ্যতে দ্বন্দ্বোত্তরশ্রুতত্বাৎ। প্রকৃতেরবস্থান্তরং বিকার.। সঙ্ঘ সমূহঃ। শব্দস্য প্রবৃত্তিনিমিত্তং ভাব.। ইদমিতি সম্বন্ধ-

मावीपलक्षण' द्धितमिष्टसाधनं स्वार्थे प्रकृत्यर्थानतिरेके' ते त्या' सुरिति खि खेय ष्य ष्यायन खीय खिक ष्ण खीक कण् खीन इय एते सेतीऽनितश्चेति अभिधानात् ज्ञातव्या इत्यर्थ । ष्या' । ष्या इत्यधिकार प्राग् प्राग्। विकारे। ष्यन्तादिकारे वेत्त्यादिलात् ष्ण स्यात् मृत्तिकाया विकार' मार्त्तिक आश्म प्रासाद । नञा निर्दिष्टस्यानित्यत्वात् आश्मन इति कश्चित् तथाच यश्चापमाश्मनप्रख्य मेष धत्तेऽन्यदुर्वहमिति भट्टि । अश्मन्शते तु इदमर्थे भविष्यति। प्राण्योषधिवृक्षेभ्योऽवयवे च ष्यन्तेभ्य एभ्यो विकारेऽवयवे च वेत्त्यादिलात् ष्ण स्यात् प्राणिभ्य ष्ण वक्ष्यामि तदैवोदाहार्य्यम् इह प्राणिग्रहणन्तु अत परे ये त्या वक्तव्यास्ते प्राण्योषधिवृक्षेभ्यो विकारावयवयो अन्येभ्यो विकारमात्रे भवन्तीति ज्ञापनार्थम् ओषधिभ्यस्तावत्। मूर्वाया विकारोऽवयवो वा मौर्व एव दौर्व वृक्षेभ्यस्तावत् पलाशस्य विकारोऽवयवो वा पालाश शिंशपाया विकारोऽवयवो वा शांशप । इकार स्यात्। उप्राणिरजतादिभ्य ष्ण । ष्यन्तात् उवर्णान्तात् प्राणिवाचकाद्रजतादेश्च ष्ण स्यात् विकारावयवयो । देवदारोर्विकारोऽवयवो वा देवदारव प्रैयङ्गव कपोतस्य विकारोऽवयवो वा कापोत मायूर शुनो विकारोऽवयवो वा शौव मास रजतस्य विकारोऽवयवो वा राजत कुण्डलं काञ्चन तथाच पुरीं द्रक्ष्यथ काञ्चनीमिति भट्टि । काञ्चनी शासयष्टिरिति कालिदास । परशव्यस्य विकारोऽवयवो वा पारशव्य विकारे वा विहितस्य लुक् वक्ष्यते। रजतं काञ्चन लौह सीस लोहितक तथा। उडुम्बर पीतदारुविकङ्कतविभीतका । कण्टकारी नीप दारु परशवीऽव कीर्त्तित । अनुदात्तादे । ष्यन्तादनुदात्तादेर्विकारेऽवयवे चार्थे ट्र स्यात्। दण्डिनो विकारोऽवयवो वा दाण्ड दाधित्थ कापित्थ । पलाशादेर्वा । ष्यन्तात् पलाशादेस्तयो ट्रो वा स्यात् । पालाश पचे ष्ण पालाश पालाशस्य विकार, पालाशमय । पलाश खदिरौ रम्भा पुन्नागशिंशपावपि। विकङ्कत करीरश्च शिरीष स्यन्दनस्तथा। यवासश्च दश प्रोक्ता पलाशादौ मनीषिभि । ट्रे नन् शम्या । शमीशब्दस्य विकारावयवयोत्पन्न ट्रे नन् स्यात् न इत्। शम्या विकारोऽवयवो वा शामीन पल्लव शामिनी स्रुक् अतएव ट्र विधानसामर्थ्यात् न नलोप । वृद्धशराद्येकाज्भ्यो मयडभक्ष्याच्छादनयोर्वा त्वन्येभ्य । ष्यन्तात् वृद्धात् शरादेरेकाचश्च भक्ष्याच्छादनभिन्ने वाच्ये विकारावयवयोर्मयट् स्यात् वृद्धादिभिन्नात् तु वा ट्र्षणयोरपवाद । आम्रस्य विकारोऽवयवो वा आम्रमय आत्ममयम्। शरादेस्तु शरमय दर्भमयम्। शरो दर्भ कुटीरश्च तृणसोमश्च वल्वज हिरण्येन सह

विकारावयवयोः ष्य स्यात्। कंसीयस्य विकारः कांस्यः तस्य विकारः कांस्य एवं ऐणेयः तस्य ऐणेय. तस्यादिति वर्त्तते तेन एण्या अपत्यम् ऐणेयः अस्य विकारोऽवयवी वा ऐणेयमयम्। वपुजतुनोः षे सन्। अनयोर्विकारविहिते षे सन् स्यात् न इत्। वपुणो विकार. वापुषम् एव जातुषम् अतएवाभ्याम् उदन्तत्वेऽपि ष्य। उष्ट्राष्यको वा तुमोर्णाभ्याम्। ष्यन्तादुष्ट्रशब्दात्तयोर्ष्यकः स्यात् उमोर्णाभ्यान्तु वा। उष्ट्रस्य विकारोऽवयवी वा औष्ट्रक प्राग्धिट्टस्यापवादः। उमा अतसी ऊर्णा मेषलोम औमकम् औमम् और्णकम् और्णं ष्यः। गोद्रुमयोर्भ्यो यो माने त द्रोर्वयः। ष्यन्तेभ्य एभ्यस्तयोर्यं स्यात द्रुशब्दात्तु वयो माने वाच्ये। गोर्विकारोऽवयवी वा गव्यं द्रोर्द्रव्य पयस पयस्यं माने तु द्रोर्विकारोऽवयवी वा द्रुवय मानम्। अप्लक्षादेः फले लुक् तेषा कदम्बादेस्तु पुष्पे च। प्लक्षादिभिन्नेभ्य। विकारावयवयोरुत्पन्नत्याना फले वाच्ये लुक् स्यात् कदम्बादेस्तु फले पुष्पे वाच्ये। आमलक्या विकारोऽवयवी वा फल आमलकम् उलुकि स्त्रीत्यस्य लुक्। एव वदर पीलु वकुल फल फलितस्य वृक्षस्य फलमवयवी विकारश्च भवति। यथा पल्लवितस्य पल्लवः इति वामनः। प्लक्षादेस्तु प्लक्षस्य विकारोऽवयवी वा फल प्लाक्ष फलम्। प्लक्षन्यग्रोधवृहतीककुभाश्वत्थवेणवः। ककद्रुरिङ्गुदी शिग्रुहस्तिन्यः कथिता दश। कदम्बादेस्तावत् कदम्बस्य विकारोऽवयवी वा कदम्ब फल पुष्पञ्च चम्पक फल पुष्पञ्च। कदम्बचम्पकाशोककोविदारसुकण्टकाः। कुटजः करवीरश्च सिन्धुवार इहेरिता। कर्णिकार, पाटला च कदम्बादौ दशेति च। जम्ब्वा लुप् च वा। जम्बुशब्दाद्विकारावयवोत्पन्नत्यस्य लुप् लुकौ स्याता वा। चानुकृष्ट पुष्प नानुवर्त्तते फल एव। जम्ब्वा विकारोऽवयवी वा लुकि जम्बूफल लुपि जम्बूफल फले फलानि चेति विशेष। लुपि सति प्रकृतेर्लिङ्गवचने स्त इति न्यायात् उभयत्यन्तपक्षे जाम्बव फलं जाम्बवे फले जाम्बवानि फलानि। व्रीहिहरीतक्यादिभ्या लुप् पुष्पमूलयोस्तु मल्लिकाविदार्य्यादिभ्याम्। व्रीह्यादेर्हरीतक्यादेश्च फलविषये तदुत्पन्नस्य लुप् स्यात्। मल्लिकादेस्तु पुष्पे विदार्य्यादेस्तु मूले लुप्। व्रीहिणा विकारोऽवयवो वा व्रीहयः फलानि एव मुद्गा माषा यवास्तिला इत्यादि। हरीतक्यादेस्तु तावत् हरीतक्या विकारोऽवयवो वा फलं हरोतकोफलम्। हरीतकी शीतपाकी दंती शेफालिका वशा। मल्लिका पिप्पली चिञ्चा श्वेतपाकी च कर्कटी। पथ्या कोषातकी द्राक्षा मृद्वीका कण्टकारिका। तथा चार्ज्जुनपाकी च शेष शिष्टप्रयोगत। मल्लिकाया पुष्प मल्लिका। मल्लिका मालती जाती केतकी वनमालिका। शेफाली माधवी

द्रैती पाटली नवमालिका। शेफालिकैकादशप्रोक्ता: शेषं शिष्टप्रयोगत:। इह्ह हरीतक्यादौ च मल्लिकादितीशेफालिकाना पाठाल् फलपुष्पयोस्तस्य लुप्। पाटला-श्रुच्स्येह कदम्बादौ लुक्लुपौ फले लुप् वा। विदार्य्यां विकारोऽवयवो वा विदारीमूलम्। विदारी बृहती रम्भा गम्भारी शालपर्ण्यपि। हरिद्राशमती सप्त शेष शिष्टप्रयोगत:। व्रीह्यादीनां लुपि प्रकृतेर्वचनं न भवति किन्त्वभिधेयवत् तेन व्रीहेर्विकारोऽवयवो वा फलानि व्रीहय: एवं हरीतक्या: फलानि हरी-तक्य: फलानीत्यादि। मानात् क्रीतवत्। परिमाणवाचिन: क्रीतार्थे यस्मात् यो विहितस्तस्माद्विकारेऽर्थे स त्य: स्यात्। निष्कस्य विकार: नैष्किक: द्विनैष्किक द्विनिष्कम् इह मानशब्देन सख्यापि गृह्यते तेन शत्य: शातक: द्विसहस्रं द्विसाहस्रम् इत्यादि बोध्यम्। त्वौ गोदोहाखीनो हियङ्गुश्च घृते। ष्यन्तात् त्वौ गोदोहशब्दात् विकारे घृते वाच्ये खीन: स्यात् तस्मिन् हियङ्ग्वादेशश्च। त्वौ गोदोहस्य विकार: हैयङ्गवीनं घृतं घृते किं त्वौ गोदोहमुदश्वित्। सङ्घे। ष्यन्तात् सङ्घेऽर्थे प्रादि-त्वात् ष्ण: स्यात्। नराणां सङ्घ: नारं काक यमादेस्तु याम्यम् आदित्यं प्राजापत्यं पाशुपतम् आग्नेयं कालेयं औत्समित्यादि। कवचि हस्त्यभिक्षाद्यचित्तेभ्य: ष्णिकं। ष्यन्तात् कवचिनो हस्तिनो भिक्षादिवर्जेभ्योऽचित्तवाचिभ्यश्च सङ्घे ष्णिक: स्यात्। कवचिना सङ्घ: कावचिक हस्तिना सङ्घ: हास्तिकं प्रतिपदोक्तग्रहणे लिङ्गविशिष्ट-स्यापि ग्रहणं तेन हस्तिनीनां सङ्घ: हास्तिकं घ्येयभिन्नवाच्ये पुंवद्भाव:। अचित्तेभ्य-स्तावत् अपूपानां सङ्घ: आपूपिक शाष्कुलिकं घाटिकमित्यादि। भिक्षादेस्तु भैक्षम्। भिक्षाचेतकरीषाङ्गवर्षपद्धतिदक्षिणा। सहस्राङ्गारगर्भिण्योऽथर्वा युवतिचर्म्मिणौ। गर्भिणीयुवत्योश्चित्तत्वात् णे सिद्धे पुंवद्भावार्थ: पाठ इति जयादित्य:। तेन गर्भिणीनां सघ: गार्भिण यौवन भाष्यकारस्तु वा पुंवद्भावमङ्गीकरोति तन्मते यौवनमिति च। तथाच स्वरूपमभिनेपथ्यं कलाकुशलयौवनम्। यस्य पुण्यकृत: प्रैष्यं सफलं तस्य यौवनमिति भाष्यम्। मूले आङ्गमिति अङ्गां सघ इति वाक्यम्। भिक्षादिपाठात् ष्ण. न तु ष्णिक. अङ्गाऽङ्गीऽनीन इति अङ्गादेश:। क्रतावीनोऽङ्ग:। ष्यन्तादहन् शब्दादीन: स्यात् सघे क्रतुविषये एव अह्ना सघ: अह्नीन. ईने नाङ्गादेश:। गणि-काया: ष्य: वेश्यास्तु वा। ष्यन्तात् गणिकाशब्दात् ष्य: स्यात् वेश्यास्तु वा। मूले गाणिक्यमिति गणिकानां सघ इति वाच्यं वेश्यानां संघ: वैश्यं पचेऽचित्तवत्त्वात् ष्णिक: वैशिकम्। केदारात् कण् च वा। ष्यन्तात् केदारशब्दात् ष्यकणौ वा स्याताम्। केदाराणां संघ: कैदार्य्यं कैदारक पचेऽचित्तवत्त्वात् ष्णिक: कैदारिकम्।

गोत्रराजादिभ्यो वुञ्। कस्तु धेनोरनञः। षष्ठ्यन्तादपत्यान्तात् राजादेश्च सङ्घे वुञ् स्यात् नञ्वर्जाद्धेनुशब्दात् तु कण्। दाक्षीणां सङ्घः दाक्षकं गार्गकम् औपगवकम्। मूले राजकमिति राज्ञां समूह इति वाक्यम्। राजराजन्यवत्सोक्षा उरभ्रो वृद्ध इत्यपि। राजपुत्रा मनुष्योऽष्टौ वर्णोऽत्र दशकीर्त्तिताः। धेनूनां सङ्घः धैनुकं गो-धेनुकम्। अनञ इति किम् आधेनवम् आधिनवमिति कश्चित्। अश्वादीयो वा। षष्ठ्यन्तादश्वशब्दादीयः स्यात् वा सङ्घे। अश्वानां सङ्घः अश्वीयं पक्षे आश्वम्। पर्शो-र्ड्वण्। षष्ठ्यन्तात् पर्शुशब्दात् ड्वण् स्यात् सङ्घे। पर्शूनां सङ्घः पार्श्वं डिति टिलोपः। अनुदात्तादिखण्डिकादिभ्यो ढ्ञ्। षष्ठ्यन्तादनुदात्तादेः खण्डिकादेश्च सङ्घे ढ्ञ् स्यात्। कपोतानां सङ्घः कापोतं मायूरं तैत्तिरम् अनुदात्तादि पूर्वाचार्यादिभ्यो ज्ञातव्यः। खण्डिकानां सङ्घः खाण्डिकम्। खण्डिकावडवोलूकक्षुद्रकवल्कयुगशुकाः। वरटा भिक्षुका निम्बा हरिद्रा च प्रकीर्त्तिताः। अत्र येऽचित्तास्तेभ्यः ष्णिकः ये आद्युदात्ता स्तेभ्यः ष्णो वाध्यते अहन्शब्दस्योभयत्र पाठात् ष्णढ्ञौ स्यातां न ष्णिकः। क्षुद्रक-मानवात् सेनाख्यायाम्। षष्ठ्यन्तात् क्षुद्रकमानवशब्दात् सङ्घेऽर्थे ढ्ञः स्यात्। सेना-सञ्ज्ञायां क्षुद्रकमानवशब्दौ रूढौ क्षुद्रकस्यापत्यं राजा वा वृद्धेत् कौशलाजाविति मानव्यः वेरूढात् लुक् क्षुद्रकाश्च मानवाश्च ते क्षुद्रकमानवास्तेषां सङ्घः क्षौद्रकमानवी सेना सेनाभिन्ने क्षौद्रकमानवकम्। यद्यपि अनुदात्तादित्वात् ढ्ञः सिद्ध्यति तथापि योगविभागात् सामूहिके तदन्तविधिज्ञापनार्थं सेनाख्यायां नियमार्थञ्चेदम् अतएव गोत्रत्वेऽपि गोत्रान्तत्वात् सेनाभिन्ने क्षौद्रकमानवकमिति गोत्रराजादिभ्यामिति कण्। एवं बालहास्तिकमिति अचित्तवत्त्वात् ष्णिकः। परे तु अनञ् सिद्धिरनु-दात्तादेः कोऽर्थः क्षुद्रकमानवात्। गोत्राद्वुञ् चेन्न तद्गोत्र तदन्तान्न तु सर्वतः। ज्ञापकं स्यात् तदन्तत्वे तथाचापिशलेर्विधिः। सेनायां नियमार्थञ्च यथावाध्येताञ् वुञा। वुञा गकेन अञ् ढ्ञौ बाध्यते। एतेन पूर्वविप्रतिषेधश्च गके ष्णमित इति वृत्तिकारः। अन्ये तु समूहाद्ययजादितद्धितविषये लुक् निषिध्य क्षौद्रकमानव्य-शब्दादेव त्यमाहुः। पुरुषात् ष्णेयः। षष्ठ्यन्तात् पुरुषशब्दात् सङ्घेऽर्थे ष्णेयः स्यात्। पुरुषाणां सङ्घः पौरुषेयम्। पृष्ठब्राह्मणवाडवमानवाद्यः। षष्ठ्यन्तेभ्यः एभ्यः सङ्घेऽर्थे यः स्यात्। पृष्ठानां सङ्घः पृष्ठ्यं ब्राह्मण्यं वाडव्यं मानव्यम्। पृष्ठात् क्रतौ। षष्ठ्यन्तात् स्तोत्रार्थपृष्ठशब्दात् क्रतौ विषये सङ्घेऽर्थे यः स्यात्। पृष्ठ्यः षडहो यागः। तथाच पृष्ठ्याहीनौ क्रताविति चान्द्रसूत्रम्। पाशादेः स्त्रियां षष्ठ्यन्तात् पाशादेः सङ्घेऽर्थे यः स्यात् स च स्त्रियां पाशानां सङ्घः पाश्या धूम्या। पाशधूमवनाङ्गारतृणपीठगण

इलम्। वातो नड' पीटगन' पिटग खरगोरथा'। अङ्गारशब्दस्योभयत पाठात् आङ्गारम् अङ्गार्या। चरणेभ्यो धर्म्मवत्। ध्यन्तेभ्यश्चरणवाचिभ्यो धर्म्मेऽर्थे ग्रेभ्यो यो त्या वक्तव्यास्तेभ्यस्ते त्या' सङ्घेऽपि स्युः। कठाना सङ्घ काठक कालापक छान्दो-ग्यम् औकथिक्य वाह्वृच्यम् आथर्वणमित्यादि। विषये देशे। सङ्घ' इति नानु-वर्त्तते ध्यन्ताद्विषयेऽर्थे वेत्यादित्वात् णः। यो विषयः स देशश्चेद्भवति अत विषय शब्देन ग्रामसमूहो गृह्यते। देशग्रहणात् न तु इन्द्रियग्राह्यरूपादि'। शिवाना विषयो देश' शैव. देश इति किं चक्षुषो विषयो रूपम्। राजन्यादेर्णक। ध्यन्ता द्राजन्यादेर्णक' स्यात् विषये देशे णस्यापवाद। राजन्याना विषयो देश' राजन्यक' साम्पियक.। राजन्यसम्पियौ दाक्षिमानवौडुम्बरावपि। आर्जुनायनशालङ्का नलजालन्धरायणाः। शैलूषा औडवसतिविगर्त्ताविश्ववस्तथा। ऊर्णनाभश्च वैकर्णौ दैवपातस्तथैव च। बार्थकामेयाम्बरीषपुत्रौ रैणवन तथा। विल्ववन विराटश्च शेष शिष्टप्रयोगत। विधो भौरिक्यादेः। ध्यन्तात् भौरिक्यादे विषये देशे विध स्यात्। भौरिकीणां विषयो देश भौरिकिविध' भौरिकिर्भौलिकिश्चोपयाता वियङ्कतस्तथा। शैकयतश्च कार्न्वेया भौरिक्यादौ षडीरिता। चान्द्रायणादेर्भक्तः। ध्यन्ताच्चान्द्रायणा-देर्विषये देशे भक्त स्यात्। चान्द्रायणानां विषयो देश चान्द्रायणभक्त। चान्द्रा यणो दासमितिर्वैधुका विषमखिड च। तुण्ड खाडायनौ दैवदासमित्रायणावपि। वैश्वाधनवसौरोगी तथा ग्रायखिडरित्यपि। शौद्रायणश्च ग्रालस्यायनदाचायणावपि ताचायणश्च इत्येते पञ्चभिद्दश कीर्त्तिता। ग्रन्थाद्व्याख्याने भववत्। ग्रन्थवाचिभ्यो येभ्यो ये त्या उक्ता भवेऽर्थे तेभ्य ध्यन्तेभ्य ते त्या व्याख्याने स्युः। इष्टे व्याख्यानो ग्रन्थ ऐष्टिक पाशुक। एकाचस्तु सुपो व्याख्यान सौप। षात्वणात्विक पाञ्च होतिक आग्निक. वैश्वामितक राजसूयिक पुरोडाशिक आर्गयण छान्दस ग्रन्था-दिति किं पाटलिपुत्रो सुकोशला पाटलिपुत्र सुकोशलयोर्व्याख्यायत इत्यथ। व्याख्यायतेऽनेनेति व्याख्यान' घेऽनट्। भावे वर्णदृढादिभ्य णो वा। ध्यन्तेभ्यो वर्णविषयेभ्यो दृढादिभ्यश्च भावे णो वा स्यात्। वर्णविशेष' शुक्लादि शुक्लस्य भाव शौक्ल्य कार्ष्ण्य पक्षे शुक्लता शुक्लत्वं शुक्लिमा इत्यादि। दृढस्य भाव दार्ढ्यम्। दृढादिर्यथा। दृढवृढपरिवृढभृशकृशशीतम्। विसतिर्यमलौवधिरविलातम्। पण्डितवरुणौ मधुरो लवणः सम्मतिरन्धौ जडसम्मानौ। मूकोपेन्द्र विजात्युणमूर्खा. पाठविशारदो। वक्रो दृढादौ विबुधैरीरिता षट् च विंशतिः। पक्षे दृढता दृढत्व द्रढिमेत्यादि। ध्यन्तानां वर्णदृढादीनां क्लीवत्वं स्वभावात् षिस्त्वन्तु उत्तरार्थम्।

गुणवचनब्राह्मणादिभ्यः क्रियायाञ्च। अन्तेभ्यो ब्राह्मणादिभ्यश्च भावे क्रियायाञ्च ष्यञ् स्यात् वा। मधुरस्य भावः क्रिया वा माधुर्य्यं जाड्यं कार्श्यं कार्पण्यम्। यद्यपि दृढादीनां गुणवचनत्वादनेन सिद्ध्यति तथापि पूर्व्वत्र पाठः पृथ्वाद्यन्तर्गणत्वात् इमन्नर्थः। पुरुषोत्तमस्तु इमन्नर्थं कर्म्मणि ष्यञो माभूदित्येतदर्थञ्च पाठं इत्याह तन्मते जडकृशशब्दौ दृढादौ न पाठ्यौ। ब्राह्मणस्य भावः क्रिया वा ब्राह्मण्यं माणव्यं ब्राह्मणमाणवचपलसहाय गडुलो रुद्रानिपुणविषायम्। मित्र तत्परदूत-विदग्ध पारिषदिकपरमन्थ्यविधर्म्मम्। महितपुरोहितसारथितत्स्थ शिलिको धार्म्मिकसदृश स्वस्थम्। पिशुनो बालिशकुशलसमस्थ विषमसमालसकविविष-मन्यम्। खण्डिकदण्डिकवाडवचौर वर्म्मिक शर्म्मिक सुकरसमग्रम्। सूचिकपूतिक-नरसदीन ग्रामिकरूपविशेषमुदासीनम्। आगाधयापबाधयविबाधयकापुरुषदुष्पुरु-षाश्च। उपबाधयविज्ञातौ प्रतिकूलाः तीव्रादायादा। सम्भाषी बहुभाषी सवेशौ शीर्षविघातिसम्राजौ। पूर्वापरोत्तराधरपुनः पुनरितिह धर्माश्च। एकभावलिभावा-ल्पभावकञ्जलिका अपि। ज्येष्ठाभिरूपसर्वादिपरस्परमनीश्वर। एकानुकुशला रक्षा धूर्त्तौ मध्यस्थ इत्यपि। अचेतज्ञानपूर्वश्च प्रतिखेदविशन्ति च। पत्यन्ताश्च यथा कामडिभावचतुरोचितम्। ब्राह्मणादिरिह प्रोक्तः परैः शिष्टप्रयोगतः। ब्राह्मण-बालिशशब्दयोः पाठः ट्नबाधनार्थः। विषायविशदौ तत्वबाधनार्थं नैताभ्यां तत्वमिति अन्येऽप्याहुः। चौरधूर्त्तयोर्मनोज्ञादिसमावेशार्थं कुशलादीनाञ्च स्वरादिगणसमा-वेशार्थः। आबाधयशब्दो जनपदवचनस्तस्मात् वृद्धे कोशलेत्यादिना ण्यङ् तथा उप-बाधयविबाधयापबाधयाश्च जनपदास्तेभ्य ट्न रूढात् कम्बोजादेर्लुक्नित्यमिति लुक् ततो गोत्रचरणविहितं णकबाधनार्थं एव माणववाडवयोरपि अनीश्वरादिप्रभृतीनां नञ्ग्रादिति प्रतिषेधनार्थं। पत्यन्तात्तावत् आधिपत्यं गाणपत्यं प्राजापत्यम्। पत्यन्त-पुरोहितादिभ्य इति सूत्रयन्ति तन्नाद्रियतमस्माभिः स्वरस्येहाप्रयोगात्। वा स्त्रियां रुद्रा-देरर्हतस्तु नुण् च। ष्यन्ताद्रुद्रादेर्भावक्रिययोः ष्यञ् स्यादास च वा स्त्रीलिङ्गः अर्ह-तस्तु नुण् च। ब्राह्मणादित्वे सिद्धे लिङ्गव्यत्ययार्थं वचनम्। रुद्रस्य भावः क्रिया वा रौद्री रौद्र्यं षिलादीपि ईपि ष्यञस्य लोपः। रुद्रमित्रयथाकाम समग्रसचितन्तथा। चतुरास्यानुपूर्वश्च रुद्रादिः परिकीर्त्तितः। अर्हतो भावः क्रिया वा आर्हन्ती आर्हन्त्यं प्रशंसायां टन्। राज्ञस्तदन्ताच्च। ष्यन्ताद्राजशब्दात् तदन्ताच्च भावक्रिययोः ष्यञ् स्याद्वा ब्राह्मणादिरयं प्रपञ्चः। राज्ञो भावः क्रिया वा राज्यम्। भावकर्म्मणि नस्य लोपः अधिराज्यं प्रादिसः। दूतवणिग्भ्यां यश्च। ष्यन्ताभ्यामाभ्यां भावक्रिययोः ष्यञो

## ७२०। स्यादौ नवद्रोऽये।

स्यादौ ७।, न-व द-र. ७।।।, अये ७।

**स्यादौ स्थिता न व दरा द्विर्न स्युर्न तु ये। ऊर्णुनाव।**

## ७२१। ङिदिम् वोर्णोः।

ङित् ।१।, इम् ।१।, वा ।१।, ऊर्णोः ५।।

**ऊर्णोः पर इम् ङित् स्यात् वा। ऊर्णुविता ऊर्णविता।**

**[१८८] ष्टु ञल स्तुतौ।**

## ७२२। पिद्धसस्येम् ब्रुवो यङ्लुग्रुतुस्तो स्तु वा।

पित् हस्-रस्य ६।, ईम् ।१।, ब्रुव ५।, यङ्-लुक् रु-तु-स्तो ५।, तु ।१।, वा ।१।।

**ब्रुवः परस्य पिता हसो रस्य ईम् स्यात् यङ्लुगादेस्तु वा। स्तवीति स्तौति, अभिष्टौति न्यष्टावीत् न्यस्तावीत्। अस्तोष्ट तुष्टुव। स्तविता स्तोता।**

**[१८९] टु क्षु ल क्षुते। क्षविता।**

**[१९०] रु ल ध्वनौ। रवीति रौति। रविता रोता।**

---

स्य संयोग. तस्यादि संयोगादि. तस्मिन् नश्च वश्च दश्च रश्च ते। न यः अय. तस्मिन्। संयोगादौ स्थिता नवदरा द्विर्नस्युः। यथा उन्दिदिषति उज्जिजिषति अड्डिडिषति अर्चिचिषति। अये इति यकारे परे ये नवदरा. ते यकारेण योगे संयोगादिस्थिता अपि द्वि. स्युरित्यर्थः। यथा ऋट अरार्यते अर्य्यमाख्यातवान् आरिर्य्यत् इत्यादौ रेफस्यापि द्वित्वम्। अत्रापि अजन्तादेरित्यनुवर्त्तते। तेन अन्तादिस्थिताचो र्धो स्यस्यादौ स्थिता ये नवदरास्ते द्विर्न स्युरित्यर्थः। अन्यथा द्राल दद्रौ दिद्रासति इत्यादावपि दकारस्य द्वित्वनिषेधः स्यात्। ऊर्णुनावेति ऊर्णुञादीनां नकार आदौ दन्त्य आसीत् पश्चात् रेफयोगात् मूर्द्धन्य। तेन रेफं हित्वा णु इत्यस्य द्वित्वे पूर्वनकारस्य तथैव स्थिति परनकारस्य तु निमित्ताभावे नैमित्तिकस्याप्यभाव इति न्यायात् पुनर्दन्त्यत्वमिति ॥ ७२० ॥

ऊर्णुवितेति इमो ङित्वपक्षे श्नुभ्वोरित्युव् ॥ ७२१ ॥

[१८१] तु ल वृत्ति-हिंसापूर्त्तिषु।

तौति तवीति। तोता तविता।

[१८२ ब्रू ञल उक्तौ। ब्रवीति।

७२३। पञ्चतिप्पञ्चणब्वाहश्च।

पञ्च।१॥, तिप्।१॥, पञ्च।१॥, णप्।१॥, वा।१। आह १।, च।१।।

ब्रुवः परेषां पञ्चानां तिबादीनां पञ्च णबादयो वा स्युः, ब्रुवश्चाहः स्यात्। आह आहतुः आहुः।

७२४। हस्त थि।

६।, त।१।, थि ७।

आहो हस्य तः स्यात् थे परे। आत्थ आहथुः। पक्षे सुगमम्।

७२५। वचोऽरे।

वच १।, अरे ७।

ब्रुवो वचः स्यात् अरे। अवोचत् उवाच ऊचे।

---

पिचासौ हस् चासौ रश्चेति पिङ्ख तस्य। यङ् लुक् यस्मात् स यङ्लुक् यङ्लुक् च रुश्च तुश्च स्तुश्चेति तस्मात्। वोभवीति वोभोति रवीति रौति तवीति तौति स्तवीति स्तौति। रुतुस्तूना छन्दस्येवेत्येके। अभिष्टौतीति गीक इति षत्वम्। न्यष्टावीदित्यादि सुस्तुधोरितीमि निविपरिस्वनुञ्जेति वा षत्वम्। पे किं अस्तोष्ट इत्यत्र आदौ गुणे ऊत्वपरत्वाभावात् न सिलोप.। तुष्टुवेति नेमसुमिति न इम्। स्तोतेत्यादि वेम्सहेतीम् वा चवितेति नेमैकाजेत्यत्र चुवर्जनादिम्। रोतेत्यादि रुदुसुनोस्तृष्या इति वेम्। तोतेत्यादि वेम् सहेतीम् वा ॥७२३॥

पञ्चाना तिपा समाहार पञ्चतिप् पञ्चाना णपा समाहार पञ्चणप् आहादेशे णबाद्यादेश पञ्च एव। स्थानिवदादेश इति न्यायात् णबादौ न द्वित्व यपश्च नेम् नाप्यतीतकालप्रतीति। तथाच प्राह स्म रामं भरतोऽपि धर्म्मग्रमिति भट्टि. ॥७२३॥

पिङ्खस्येमित्यत्र ब्रुव स्वरूपग्रहणात् आत्थ इत्यत न इम् ॥७२४॥

अरे इति विषयसप्तमी। तेन क्त्वा वचादेशे सति वक्त्यस्य स्येति ङप्रत्ययौ

# ह्लादिः।

---

[१९३] हुलि होमे।

७२६। ह्वादिः रे ह्विः।

ह्वादि १।, रे ७।, ह्वि १।।

ह्वादिर्ह्विः स्यात् रे परे। जुहोति।

७२७। ह्वो वच्यणौ।

ह ६।, व ।२।, अचि ७। अणौ ७।, ।

होरुकारस्य व् स्यात् अणौ अचि रे। जुह्वति जुह्वधि।

---

भविष्यतीति सम्भाव्य डप्रत्ययप्राप्तेः पूर्वमेव वचादेशः। अन्यत्र अप्रत्ययोत्पत्ति-सम्भाव्ये वचादेशः ततः सर्वत्र ञ्नोनानुबन्धत्वात् उभयपदमिति। यथा अवोचत् अवोचत उवाच ऊचे ऊच्यात् वर्वोष्ट इत्यादि। विब्रूति. कटके ब्रतजनैरिति तु अर्वविहितकार्य्यस्यानित्यत्वात्। एवं ब्रुवी. कभाव इत्यनेन कप्रत्यये ब्राह्मण ब्रूते ब्राह्मण ब्रुव। अतएव सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे। अधीते शत-साहस्रमसंख्यं वेदपारगे इति पठन्ति ॥७२५॥

---

ह्वादिर्ह्विः स्यात् रे परे। जुहोतीति रपिद्रस्तुत इत्यत्र ह्विवर्जनात् न त्रि.। ह्वादिस्तु। हुलि होमे जिलिभी तु भये स्यात् ह्रीलि तु लज्जे पृलि रक्षणे स्यात्। ओकृहालि त्यजने ऋलि गत्या घृलि तु सेके दीपनक्षत्याम्। हलि बलात्करणे लिस गत्या भस लि भर्त्सनकरणे द्युत्याम्। कित लि किलि ज्ञाने कथितस्तु निर्धावनकर्म्मणि विदितः। धन लि धान्ये धिष लि ध्वनने जन्मलि च तु विदितौ जनने। निजिरलिञौ शौचे पोषे स्यात् विजिरलिञौ तु पृथग्भावे स्यात्। विषिर्लिञो तु व्याप्तौ व्याप्त्या दाञ लि दाने धाञ लि धृत्याम्। भृञ लि तु पोषणकर्म्मणि धृत्या माङलि शब्दे हाङलि गत्याम्। गालि स्तुत्या ह्वादौ पठिता विद्वद्भिरिति पञ्च च बुधविदिता इति ॥७२६॥

होरु. हः तस्य। उर्वो बाधकोऽयम्। जुह्वति। अणौ किं जुहवानि रे किं

### ७२८ । पश्चाम् वा भी ह्री भृ ह्वो श्याम् ।

पश्चाम् ।१।, वा ।१।, भी ह्री-भृ ह्वो ५।, श्याम् ७। ।

एभ्य पश्चाम् वा स्यात् श्याम् । जुह्वामास जुह्वाव ।

[१८४] ञि भी ह्रि भीत्याम् । बिभेति ।

[७००] दरिद्रो ङिरित्यादि, बिभीतः बिभितः बिभ्यति बिभयामास बिभाय । [१८५] ह्री ह्लि लज्जायाम् ।

जिह्रयामास जिह्राय । [१८६] पृ ह्लि पूर्त्तौ ।

### ७२९ । पृभ्नादे ङिः खे रे ।

पृ-ऋ-भृ आदे ६।, ङि १।, खे ६।, रे ७। ।

पृ-ऋ भृ माङ-हाङा खेङिः स्यात् रे । पिपर्त्तिः ।

### ७३० । पुर्घौ वा ।

पु ६।, घं १।, वा ।१। ।

पिपूर्त्तः पिपृतः । पपरतुः पप्रतुः ।

[५७८] गुमत्त्वात् न एः । [१८७] श्रोहा कलि त्यागे ।

जहाति जहितः जहीतः, जहति ।

---

जुहुवु । ननु ह्वो वचीति कृतेऽपि गुणविधेर्विशेषत्वेन बलवत्वात् जुह्वानीत्यादौ गुणस्यैव प्राप्तौ श्णाविति सुखार्थमिति काशीश्वर । वस्तुतस्तु हुधातुसम्बन्ध्युकार-स्थानिकत्वादज्भावनिमित्तकत्वाच्च विशेषविधिना ह्वोवचीत्यनेन इङस्थानिक-त्वादज्भस्निमित्तकत्वाच्च सामान्यस्य गुर्घूङ्श्चेत्यस्य बाधित्वात् जुह्वानि इत्यादौ वकारस्यैवापत्तिरिति श्णाविलुक्तम् ॥ ७२७ ॥

श्तित्वादसञ्ज्ञाया द्वित्व पित्वाद्गुण । बिभयामास बिभाय जिह्रयामास जिह्राय बिभरामास बभार जुह्वामास जुहाव । बिभ्यतीति अन्तोऽद द्वे ॥ ७२८ ॥

पृश्च ऋश्च भादिश्च तत्तस्य । भादिस्तु भृप्रभृतिह्वादिगणसमाप्तिपर्य्यन्त इत्यत आह भृ माङ् हाङामिति । पिपर्त्ति इयर्त्ति बिभर्त्ति मिमीते जिहीते । रे किं पपार इत्यादि ॥ ७२९ ॥

पुरिति षष्ठेकम् । खे रे इति च नानुवर्त्ततेऽनिष्टत्वात् पृलि पालने इति

## ७३१। हाकोऽन्तलोपः ख्याम्।

हाक ६।, अन्तलोप. १।, ख्याम् ७।

जह्यात्।

## ७३२। हौ डा वा।

हौ ७।, डा।१।, वा।१।।

हाको डा स्याद्वा हौ। जहाहि जहिहि जहीहि। हेयात्।

[१९८] ऋर्लि गत्याम्। इयर्त्ति।

[१९९] जन मलि ङ जनने। जज्ञिषे जज्ञिध्वे।

[२००] निजिरौ ञ लि पोषणे शोधने च।

## ७३३। निजां खे रे गुः।

निजा ६।।।, खे: ६।, रे ७।, गु १।।

निजविजविषा खेर्गुः स्यात् रे। नेनेक्ति नेनिक्तः।

---

ऋस्वान्तस्य दीर्घ. स्याद्वा एव सर्व्वत्र। स्मरते ञिपॄलि तु पालने इति दीर्घान्ते स्थितेऽपि दीर्घविधानमस्य सर्वसम्मतत्वात्। पिपूर्त्त इति दीर्घे कृते ऋदिरणाविलुरिर्व्यंनच् तयोरिति दीर्घं। ऋस्वान्तमेव केचित् दीर्घान्त पठन्ति तेन पृथग् धातुर्नोयम्। अतएव ऋस्वान्तग्रहणेनैवास्य ग्रहणात् पॄभ्रादेरिति खेर्ङि। पपरतुरिति दीर्घपक्षे ऋतो गु। जहित इति दरिद्रो ङिरिति ङि। जहीत' इति श्नाद्दोरिति ई। जहतीति अन्तोऽद् हे ॥ ७३० ॥

हाको ह् ख्यामिति कृतेऽपीष्टसिद्धौ अन्तलोपगौरवं ज्ञापयति हाको हसे रे परे आदौ द्वित्वं पश्चात् कार्य्यान्तरमिति। तेन जह्यादित्यत्र आदौ द्वित्वे झभखथेति खेराकारस्य अकारः। अन्यथा प्रागच्कार्य्यादचि द्विरिति नियमेन पश्चात् द्वित्वे खेरदन्तत्वं न सम्भवतीति। एवं जहित. जहीत इत्यादावपि आदौ द्वित्वे पश्चात् दरिद्रो ङिरिति ङि श्नाद्दोरिति ईश्च इति ॥ ७३१ ॥

जहाहीत्यादि आदौ द्विः पश्चात् डा ङिः ईश्च। इयर्त्तीति ऋर्लि गत्या पॄभ्रादेरिति खेर्ङि· खेय्वौरिति इय् मूलधातोर्गुणः। एवं इयृत इयृति। द्विपि ऐयः ऐयृताम् ऐयरु.। जज्ञिषे इत्यादि वैदिकत्वेन व्यत्ययादात्मनेपदे सध्वीरसेतीम् ॥ ७३२ ॥

## ७३४। न ह्युग्ङोऽचि।

न।१।, ह्युग्ङ ६।, अचि ७।।

ह्वेरुङो गुर्न स्यादचि रे। नेनिजानि। रे किम्। निनेज।

एवं [२०१] विजिरौ ञ लि विवेके।

[२०२] विषि_लिं व्याप्तौ। अविषत् अविचत्।

[२०३] ड् दा ञ लि दाने।

प्रणिददाति। अद इत्यक्तेरालोपः। दत्ते।

## ७३५। ह्रो र्दा-धोर्दे-धे ह्यौ।

ह्रो ६॥, दाधी ६॥, दे धे।१॥, ह्यौ ७।।

ह्वेर्दाञो ह्वेर्धाञो दे धे च स्यात् ह्यौ। देहि।

## ७३६। स्था-दोर्ङिष्टौमे नणुः।

स्थादो ६॥, ङि, १।, टौमे ७।, न।१। णु, १।।

स्था-दो ङिः स्यात् टौमे, तस्य च न णुः। अदित अदि-षाताम्।

[२०४] डु धा ञ लि धारणे पुष्टौ। प्रणिदधाति।

---

बहुवचनं गणार्थं गणश्च ह्वाद्युभयपदिसमापकपर्य्यन्त इत्यत आह निजविज-विषामिति। किन्तु विजिर्लिं ञौ इति जान्तो यो धातु स विचिर्लिंञौ इति चान्त कैश्चित् पठ्यते। तेन विजग्रहणेनैव विचः प्राप्तौ विचोऽपि खेर्गु-रिति बोध्यम्। नेनेक्ति वेवेक्ति वेवेष्टि। रे कि निनेज विवेज विवेच विवेष ॥७३३॥

नेनिजानि वेविजानि वेविचानि वेविषाणि। एवं यङ् लुकि लेलिहीति मोमुचीति नर्नतीति। उङ कि जिह्रयाणि जुह्वानि पिपवानि यङ् लुकि नेनयीति बोभवीति चर्करीति। रे कि निनेज इत्यादि। अचि कि नेनेक्तीत्यादि। अविषदिति विषिर्लिंञौ शासलिङ् द्युदिति ङ। पत्ते ह्शष इति सक् अविचत्। प्रणिददातीति गदनदेति णत्वम् ॥७३४॥

दाधोरिति डुदाञलि डुधाञलि इति द्वयोर्ग्रहणम् अन्यथा ह्यौ परे दिला

## ७३७। धो द धोऽन्तलोपे तथि।

ध ६।, द ।१।, धः १।, अन्तलोपे ७।, त थि ७।

धाञो दस्य धः स्यात् तथयोः परयोः, अन्तलोपे सति। धत्ते। धेहि। अधित। [२०५] टु डु भृ ञ लि भृतिपुष्ट्योः। बिभृतः बिभ्रति। बिभरामास बभार। [२०६] मा ङ लि शब्दे। प्रणिमिमीते मिमाते मिमते।

एवं [२०७] ओ हा ङ लि गतौ।

### अदादि-पादः।

---

सम्भवात्। देश धेश देधे इति लुप्त प्रथमाद्विवचनान्त यथासङ्ख्यार्थम्। देहि धेहि ॥७३५॥

अत्र दासञ्ज्ञैव। प्रास्थित प्रास्थिषाताम् अदित अदिषाताम् अधित अधिषाता प्रणिदधातीति गदनदेति णत्वम् ॥७३६॥

धत्ते इति आदग्नोरित्याकारलोपे खेर्दस्य ध.। एव धत्तः धत्थः इत्यादि धत्स्व धद्वे इत्यादौ तु झभान्तस्येत्यादिना दस्य ध'। धो द धोऽणौ तथि इति कृतेऽपीष्ट-सिद्धौ अन्तलोपे इति गौरवं कथमिति चेन्न यङ् लुकि दाधीत. दाधीतवान् इत्यत्र दा मा गै इत्यनेन ङौ आदेशे कृतेऽपि दस्य धकारापत्तेः। बिभरामासेति पश्चामि खेङि। प्रणिमिमीते इति आदग्नोरिति ईः खेङि: पतपदादामेति णत्वम्। एवम् आते—, मिमाते अन्ते—, मिमते। एव हाङ लि जिहीते जिहाते जिहते ॥७३७॥

इति अदादिपाद.।

---

## द्वितीयः पादः—दिवादिः ।

---

[२०८] दिव्‌ क्रीडायाम्

**७३८। दिव सु तुद रुध क्र्यादे र्यन्‌ न्वनण्नाः शिद्धे रे ।**

दिव—क्र्यादे ५।, यन्‌—ना १।।।, शित्‌ ।१।।।, घे ७।, रे ७। ।

एभ्यो घेऽर्थे यन्‌ नु श्न नण्‌ ना एते रे परे क्रमात्‌ स्युः, ते च शितः। दीव्यति। [२०९] षिव्‌ तन्तुसन्ततौ। निषीव्यति। न्यषेवीत्‌ न्यसेवीत्‌। [२१०] नृतौ य नर्त्तने।

**७३९। नृत्‌ कृत्‌ चृत्‌ छृत्‌ तृदोऽरसोऽसेरिम्‌ वा।**

नृत्‌—तृद ५।, अरस' ६।, असे ६।, इम्‌ ।१।, वा ।१। ।

एभ्यः परस्यारस्य सिवर्जस्य सस्य इम्‌ स्यात्‌ वा। नर्त्तिष्यति नर्त्स्यति। सौ तु अनर्त्तीत्‌। [२११] त्रसी य भये।

---

दिवश्च सुश्च तुदश्च रुधश्च क्रीश्चेति ते आदयो यस्य तस्मात्‌। यन्‌ च नुश्च श्नश्च नण्‌ च नाश्च ते। शित्करणात्‌ रसञ्ज्ञाया अपिद्‌त्वात्‌ ङित्त्वे श्यनादौ परे न गुणः। एते शपो बाधकाः। श्नसिति मूर्द्धन्यणकारानुबन्धो रुधादेरन्त्यादचः परो भवन्नपि शपं बाधते। अत्र प्रकृतिप्रत्यययोरर्थाभिधाने साहचर्य्यस्य अनेनैव सिद्धत्वात्‌ शपबाधकानां श्यनादीनां साहचर्य्याच्च शनोऽनुरोधात्‌ क्र्यादेरित्यस्य षष्ठ्यन्तत्वेन वक्तुमुचितत्वेऽपि श्यनादीनामनुरोधात्‌ पञ्चम्यन्तत्वं विरुद्धधर्म्मसमवाये भूयसा स्यात्‌ सधर्म्मकत्वमिति जैमिनिसूत्रात्‌। दीव्यति श्यनोङित्वात्‌ गुणाभावे व्यंनच्तयोरिति दीर्घः। निषीव्यतीति षोक्त इति षत्वम्‌। न्यषेवीदित्यादि निविपरिस्वन्जेत्यादिना षत्वं वा॥ ७३८॥

[५९४] क्रमक्लमेति श्यन् वा, त्रस्यति त्रसति। तत्रास त्रेसतुः तत्रसतुः। [२१२] जॄ ङ्य्यं जरायाम्।

जीर्य्यति। अजरत् अजारीत्। जेरतुः जजरतुः। जरीता जरिता।

[२१३] शो य निशाने।

## ७४०। यन्योश्शमादिमिदो लोपघंणु।

यनि ७, ओ-शमादि-मिदः ६।, लोप घं णु १। ।

ओकारस्य लोपः शमादेर्घो मिदेर्णुः स्यात् यनि। श्यति। अशात् अशासीत्। एवं [२१४] एवं छो य लूनौ।

[२१५] षो य नाशे। प्रणिष्यति। न्यषात् न्यषासीत्। सेयात्

[२१६] दो य छेदने। प्रण्यदात् देयात्।

[२१७] राध्यौ ण हिंसे।

रेधतु' रराधतुः। वधार्थः किम्, आरराधतुः।

[२१८] व्यध्यौ ताड़े। विध्यति। विव्याध, विविधतुः।

[२१९] पुष्यौल्ट पोषणे।

[५६५] शासुलिद्द्युत् पुषादेर्ङस्तौपे इति ङः। अपुषत्।

[२२०] श्लिष्यौ ञिल्ट श्लेषे। अश्लिषत्। आलिङ्गने तु अश्लिक्षत्।

---

नृत् कृत्। नृतीय नर्त्तने कृती ध वेष्टे कृतीश्प छिदि इति इयम्। चृत् श्र हिंसे ग्रन्थे चृत् कि सन्दीपने इति इयम्। छृदुञ्धि दीवने छृद कि सन्दीपने इति इयम्। तृदुञ्धिर्नादरे च। नर्त्तिष्यति नर्त्स्यति कर्त्तिंस्यति कर्त्स्यति चर्त्ति-ष्यति चर्त्स्यति छर्दिस्यति छर्त्स्यति तर्दिष्यति तर्त्स्यति सौत्र अनर्त्तीदित्यादि। जीर्य्यतीति ऋदिरणाविति इर् व्यंनच्तयीति दीर्घः। अजरदित्यादि शासलिद्द-द्युदिति ङ हृश्रीरिति गुणः। पक्षे सौ पे वृद्धि'। जजरतुरित्यादि ऋतीणः पक्षे खिलोपादि। जरीतेति वृतो वेम इति दीर्घः॥ ७३९॥

ओश्च शमादिश्च मिद च ततस्य। लोपश्च घंश्च णुश्चेति। छति दाति स्यति

[२२१] रध्यू ल्ट पाकहिंसयोः।

७४१। नुण् रधो मुचां नश्मस्जो रभलभोऽनठीमच्ये भस्यरठ्यचि।

नुण् ।१।, रध ६।, मुचा ६।।।, नश् मस्ज. ६।, रभ' लभः ६।, अनठीमचि ७।, ए ७।, भसि ७।, अरठ्यचि ७।

रधश्चीवर्जे मवर्जेऽचि। मुचादेरत्ये, नश मस्जोर्भसे, रभलभोरठोवर्जेऽचि, नुण् स्यात्। अरन्धत्। रधिता रद्धा। ठ्यान्तु ररन्धिव रेध्व, ररन्धिम रेध्म। [२२२] तृप्यू जिल्ट प्रीणने। अतर्पीत् अत्राप्सीत् अताप्सीत् अतृपत्। एव [२२३] दृप्यु इजि हर्षाहङ्कारयोः। [२२४] मुह्यू जिल्ट वैचित्त्ये।

मोहिता [१७८] मुहां घङ्वाभौ। मोग्धा मोढा।

---

स्यति शमादिश्च। शमु श्रमू दमुश्चापि चमु तमु भमुश्च क्लमुमदीति च मनीषिभिर्निगदित शमादिर्गण। शाम्यति श्राम्यति दाम्यति चाम्यति ताम्यति भ्राम्यति क्लाम्यति माद्यति। मिदस्तु मेद्यतीति। अशादित्यादि थेशाक्कासाग्नेति. सेलुक्। पक्षे यमरमेति इम् सनौ। प्रणिश्यति इति दामासीहन इति णत्वात् गौक इति षत्वम्। न्यषादित्यादि थेशाच्छासाग्नेति से पेलुक् वा अभ्यपीति षत्व सेयादिति दामा गे इति ङे प्रणदादिति भूस्थापिवेति सेलुक् पतपददामेति षत्वम्। दैयादिति दामागे इति ङे। रेधतुरिति अनेकार्थत्वादिह राधेर्वधार्थत्वे विधिबलादातोऽप्येत्वम्। अरराधतुरिति। आराध्यते सेवार्थत्वात्। विध्यतीति ग्रहस्वपाद्योरिति जि.। विव्याधेति व्यथग्रहेति जि। विविधतुरिति व्यथग्रहेति खेर्जि ग्रहस्वपाद्योरिति मूलस्य जि। अश्लिषत् इति पुषादित्वात् ङ। अश्लिक्षदिति हशष इति सक्॥७४०॥

न ठी अठी अव्या इम् अठीम् नास्ति अठीम् यत्र अनठीम् अनठीम् चासौ अच्चेति अनठीमच् तस्मिन्। अनठीमचि रश्च ठी च रठ्यौ न रठ्यौ अरठ्यौ तयोरच् अरठ्यच् तस्मिन्। अनठीमचीति रध्यते ईमि सामान्ये अचि च नुण् स्यादित्यर्थे। यथा ररन्धिव ररन्धिम ठ्या अचि ररन्ध अन्याचि रन्धयति अरन्धि रन्धनम्। अठीमिति तु रधादित्वादिमि रधिष्यति रधिता रधितव्यम्। किञ्च ठीमचि

[२२५] नशल्ट य् नाशे ।

## ७४२ । नश नेश वा ङे ।

नश ।१।, नेश ।१।, वा ।१।, ङ ७। ।

प्राणेशत् प्राणशत् । नशिता प्रनग्धा प्रनंष्टा । [५४८] अशान्तत्वात् न णः । [२२६] शम् श्य इर् उपशमे । प्रणिशाम्यति । [२२७ क्लम्य् भिर् ग्लानौ । क्लाम्यति क्लामति । [२२८] अस्यु इर् क्षेपे । आस्थत् । [२२९] यस्यु इर् यत्ने ।

यस्यति यसति, संयस्यति संयसति । अन्यत्र । प्रयस्यति । [२३०] लुभ्य इर् गार्द्ध्ये । लोभिता लोब्धा । [२३१] ञीर् य मिदा स्नेहे । [मिद्यति । [मिदेर्गुः] [२३२] सू यो ङ सूतौ ।

असविष्ट असोष्ट । [२३३] ओ ढीङ य क्षये ।

---

इत्युक्तेऽपीष्टसिद्धौ अचलादिव ठीम प्राप्तौ ठीमो ग्रहणादेव अनिमो वर्जने च तु गौरव ज्ञापयति रध्यते पुषादित्वात ङ लुगि क्रते हसुङ न इत्यनेन नस्य लोपो न स्यादिति । तेन अरन्धदित्येव न च लुणकरणसामर्थ्यात् नलोपो न स्यात् इति वाच्य रन्धयतीत्यादौ लुण सामर्थकत्वात् मुचामिति बहुवचन गणार्थम् । गणश्च मुञ्चति लुम्पि लिम्पौ च विन्दि' सिञ्चति क्रन्तती । खिन्दति. पु सतिश्चैव मुचादावष्टधातव इति । मुचादेरत्ये इति तुदादित्वात् जाते शप्रत्यये परे इत्यर्थः तेन मुञ्चति इत्यादि । अन्यव घञि मोकः । नशमसजोर्झसे नंष्टा नङ्क्ष्यति मङ्क्ता मङ्क्तु, मङ्क्ष्यति । रभलभोस्तु रम्भयति अरम्भि आरम्भ. लम्भयति अलम्भि आलम्भ रठ्री रठीतु रभते रेभे लभते लेभे । अतार्प्सीदित्यादि ञ णि टप्यू प्रीणने दि क्रषन्तेति सिपक्षे ऋकारस्य वृद्धिः । वद्रोऽकिदिति रेफपक्षे अवाप्सीत् रधादित्वात् इम् गुणपक्षे अतर्पीत् पुषादित्वात् ङ अटपत् । मोढेतेति रधादित्वादिम् वा । पक्षे मुहादित्वात् घडि मोग्धाघङोऽप्राप्तिपक्षेऽन्तरङ्गत्वात् परत्वाच्चादौ गुणे ढोढौभाविति हस्य ढे ढभात्तथोर्धो ध इति तकारस्य धे ष्टुभिरिति धस्य ढे ढ्रोढ्रि इति ढलोपे पूर्वङ्गस्वालाभान्न दीर्घ मोढा ॥ ७४१ ॥

नश । नश् ल नाशे इत्यस्य नेश् स्याद्वा ङ । प्राणेशत् इत्यादि शान्तनशेति णत्वम् । नशितेति रधादित्वात् इम वा । पक्षे नशमसज इति लुघि शक्राजेति

## ७४३। दीङ्श्यां यन् यप्णौ ङा सनि तु वा।

दीङ ६।, श्या ७, यन् ।१।, यप्णौ ७, ङा ।१।, सनि ७, तु ।१।, वा ।१।।

दीङः श्या यन्, यपि णौ च ङा, सनि तु वा स्यात्। अदास्त दिदीये। [ २३४ ] जनी श्य ङ प्रादुर्भावे। जायते।

## ७४४। जनवधः सेममोऽक्रमवमाचमो-ञ्णित्क्तादिणि स्वोऽमयम विश्रमस्तु वा।

जनवध ६।, सेमम. ६।, अ-क्रमवमाचम ६।, ञ्णित् क्तादिणि ७।, स्व १।, अम-यम-विश्रम ६।, तु ।१।, वा ।१।।

जनो वधः सेमोऽमन्तस्य च क्रमवमाचम वर्जस्य स्वः स्यात् ञ्णिति क्तिति इणि च, अम यम विश्रमस्तु वा। अजनि अजनिष्ट जज्ञे। [ २३५ ] दी पी ङ्य ऋट दीपने।

अदीपि अदीपिष्ट। एवं [ २३६ ] पूरी ङ्य प्यायने।

[ २३७ ] पद्यौ ङ गतौ।

[ ६४२ ] पदस्तनीण् धे इति। प्रत्यपादि अपत्साताम्।

[ २३८ ] बुध्यौ ङ अवगमने। अबोधि अबुद्ध।

[२३९] नहौ जर बन्धे। [२३७ नहो धङ्भौ। अनात्सीत् अनद्ध।

इति दिवादिपादः।

---

षड् तस्य टत्वे प्रनष्टा। पक्षे नुणि मुहादित्वात् घडि दभादिति तस्य धे झप् झसीरिति घस्य गे नस्यानुस्वारे तस्य च ङकारे प्रनङ्ग्धा अमान्तत्वात् न ण.। प्रणिशाम्यति इति वपवहशमचीति णत्व शमादित्वात् दीर्घ.। क्राम्यतीति क्रमक्रमेति श्यनि शमादित्वात् दीर्घं। आस्थदिति असु इर क्षेपे वक्त्यस्येति ङे वच्यस्यश्विपतामिति अस्थ। लोभ्या इत्यादि वेमसहेतीम् वा। मेद्यति इति यन्यो मजादीति गुण। असविष्टेति वेमूदितीम् वा॥ ७४२॥

यप् च णश्च यप्णु सूत्वादेकत्व तस्मिन्। दिदीये दिदीयाते। यपि प्रदाय णुरिति गुणसाधनयोग्य। अदास्त दास्यते दापयति दाता। सनि दिदासते दिदीषते। जायते इति ज्ञादानेति जा॥ ७४३॥

[२४०] षु ञ न बन्धे।

सुनोति अभिषुणोति सुनुतः सुन्वन्ति। [ ६३२ ] सुस्तु-धोरितीम्। व्यषावीत्। असविष्ट असोष्ट। सुषुविव। विसवि-ष्यति विसोष्यति। ५७२ स्यान्तत्त्वात् न षः।

[ २४१ डु मि ञ न क्षेपे।

७४५। मिम्योर्यवृणौ ङाऽखललि लियस्तु वा।

मिम्यो ६॥, यपृणौ ७, ङा।१।, अ खल अलि ७।, लियः ६।, तु।१।, वा।१।।

अमासीत् प्रश्यमास्त।

---

जनश्च वध् च जनवध् तस्य कमश्च वमश्च आचम् च ते, न विद्यन्ते ते यत्र स तस्य। सेम् चासौ अम् चेति सेमम् तस्य। ञ च णच ञणौ ञणावितौ यस्य स ञणित् ञणिच्चासौ कृच्चेति ञणित्कृत् ञणितकृच्च इण् च ञणित्कृदिन् तस्मिन्। यथा व्यणि जन्य वध्य घञि जन बध' णकि जनक इणि अजनि अवधि। सेमोऽमन्तस्य तु। घञादौ श्रम श्रमक' अश्रमि। सेम कि गामुक. अगामि। कामादेस्तु काम वाम आचाम। आचम कि चम विचम। अमादेस्तु अम आम यम याम विश्रम. विश्राम विश्रमग्रहणात् श्रम प्रश्रम इत्यादिषु नित्यम्। अजनीति पद स्तनीण् वे इति इण्। पक्षे व्यां सि अजनिष्ट जज्ञे इति हनगमेत्युड् लोप। अदीपीति पदस्तनीण् वे इतीण् वा प्रश्यपादीति गदनदपतपदेति णत्वम्। ननु अमुङित्यादौ सेर्लोपे त्यलक्षणमिति न्यायात् भभान्तस्येत्यादिना वकारस्य भकार कथ न स्यादिति चेत् सत्य त्यलोपे सति त्यस्वरूपेण विहित कार्य्यं तदेव स्यात् न तु प्रत्ययस्य वर्णविहितम् इति। अनात्सीदिति अनिमत्वात् वृद्धि अनद्ध इति नद्धो धड् भौ इति धड्॥ ७४४॥

इति दिवादिपाद।

---

अभिषुणोति इति गीक इति षत्वे षृर्ण इति णत्वम्। सुन्वन्ति य्वौरिति व। व्यषावीदिति सुस्तुधोरितीम् अभ्यपीति षत्वम्। असोष्ट इत्यादि वेमुदितीम

[ २४२ ] चि ञ न चित्याम्।

७४६। चेः किर्वा सन् ठ्योः।

चे' ६।, कि १।, वा।१।, सन् ठ्यो ७॥।

चिकाय चिचाय। चिक्ये चिच्ये। [२४३] स्तृ ञ न स्तृतौ।

७४७। स्वादृ-वृ-वु-रस्कु र्वेम् सन्मढीसिः।

स्वादि-ॠत्-ॠत् वु' ५।, अस्कु' ५।, वा।१।, इम्।१।, सन्-मढीसि' ६।।

स्कुवर्जं स्वाद्यृदन्तात् ॠदन्ताच्च वृञो वृङश्च सनो मे स्थितयोर्ढीस्योश्च इम् स्यात् वा। अस्तरिष्ट अस्तृत। स्तरिषीष्ट स्तृषीष्ट। [२४४] वृञ न वृतौ। अवारीत्। अवरीष्ट अवरिष्ट अवृत। ववरिथ ववृव। वरिषीष्ट वृषीष्ट। [२४५] धु ञ न कम्पे। [६२३] सुस्तुधोरितीम्। अधावीत् [२४६] हि न वर्द्धने गतौ। प्रहिणोति।

---

सुषुविव इति रुदसुनीरव्या इति इम्निषेधात् नेमसुमिति नियमेन नित्यमिम् क्विलादिति षत्वे श्नुध्वोरित्युव् ॥ ७४५ ॥

डुमिञ् न क्षेपे मीङ्यतु मीञग् बधे मी कि गत्या विशेषानभिधानात्। एषां यपि गुणसाधनयोग्यप्रत्यये च ङा स्यात्। न तु खलि अलि च। लियस्तु यपि गुणसाधनयोग्ये च ङा स्याद्वा। यथा प्रमाय माता मान मास्यति मापयति। खलस्तु दुर्मय मय लियस्तु प्रलाय प्रलीय लाता लेता इत्यादि ॥ ७४५ ॥

चे किर्वा स्यात् सनि ठ्याञ्च। चिकाय चिचाय चिकीषति चिचीषति ॥७४६॥

स्व आदिर्यस्य स स्वादि स्वादिश्चासावृच्चेति स्वादृत् 'स्वादृच्च ॠच्च वृश्चेति स्वादृवृवृ तस्मात्। नास्ति स्कुर्यत्र सोऽस्कु तस्मात्। ढी च सिश्चेति ढीसि मे ढीसिः मढीसि। सन् च मढीसिश्चेति तस्य सर्वत्र पुस्त्वं सूत्रत्वात्। यथा तिस्तरिषति तिस्तीर्षति स्तरिषीष्ट स्तृषीष्ट अस्तरिष्ट अस्तृत। इगुङुरिति कित्वान्न गुणः। तितरिषति तितीर्षति तरिषीष्ट तृषीष्ट अतरिष्ट अतीर्ष्ट। विवरिषति वुवूर्षति विवरिषते वुवूर्षते वरिषीष्ट वृषीष्ट अवरिष्ट अवृत। अस्कु, किं सञ्चिकीर्षति सस्कृषीष्ट समस्कृत। अवारीदिति नेमेकाजा इत्यत्र वृवर्जनात् इम्। अवरीष्ट इति वृतो र्वे मौ र्घ इति दीर्घः। ववरिथ इति नेश्वृत स्थप इत्यत्र वृवर्जनात् इम्।

७४८। ह्रेः खेरनङि घिः।

हे. ६।, खे ५।, अनङि ७।, घिः १।।

खेः परस्य हेर्घिः स्यात् न तु अङि। जिघाय।

[२४७] क्षवि न क्षतौ हिंसे।

७४९। क्षविधिव्योः क्षधी श्नौ।

क्षवि धिव्योः ६॥, क्ष-धी १॥, श्नौ ७।।

क्षणोति अक्षणीत् [५६८] अतएवेदितो नुण्। चक्षण। क्षणिता क्षण्यात्। [२४८] दन्भु न दम्भे। देभतुः ददम्भतुः।

७५०। श्रन्थ-ग्रन्थ-दन्भां थपि न-लोपो वा।

श्रन्थ-ग्रन्थ दन्भा ६।।।, थपि ७।, नलोप १।, वा।१।।

देभिथ ददम्भिथ। [२४९] धिवि न प्रीतौ। धिनोति। [२५०] अशू ङ न व्याप्ति सङ्घ्योः। [५८०, स्वान्तादादिति खेरान्। आनशे।

इति स्वादिपादः।

---

जहर्वेति नेमसुम इति नित्य इमो निषेध। अधावीदिति सुस्तुधीरिति इम्। प्रह्णोति इति मीनाह्विन्वानिति णत्वम् ॥ ७४७ ॥

जिघाय जिघीषति जेघीयते। अङि तु अजीहयत् ॥ ७४८ ॥

क्षविधिव्योर्विभक्त्युत्पत्ते पूर्वम् इदनुबन्धत्वात् नुणि कृते तस्यापि धात्ववयवत्वात् श्नौ परे तत्सहितयोरादेश। क्षणोति इति ष्रृणं इति णत्वम्। अक्षणीदित्यादौ नकारस्य टृत्यत्वेन झसत्वाभावात् तस्मिन् मोर्नुरित्यनेनानुस्वारो न स्यात् ष्रृर्ण इति णत्वम्। देभतुरिति स्यात् ठापिदिति कित्वपक्षे नलोपे दभभागलाभात् खि-लोपादि ॥ ७४९ ॥

एभ्यस्थप् कित् वेति कृतेऽपीष्टसिद्धौ थपि नलोप इति गौरवम् कथमिति चेन्न दम्भिनोदे इति इदनुबन्धचुरादेरनित्यपक्षे देभिथ इत्यत्र थप किदेति पक्षे इदि-त्वातोर्नलोपनिषेधात् हमुङ् न इत्यस्याप्राप्तौ चुरादेरनित्यत्वबीजं चुर्भ्यो जिरित्यत्र द्रष्ट सष्टायम्। श्रथिथ श्रश्रन्थिथ ग्रेथिथ जग्रन्थिथ देभिथ ददम्भिथ ॥ ७५० ॥

इति स्वादिपाद.।

## चतुर्थः पादः—तुदादिः ।

[२५१] तुदौ ञ श व्यथे । तुदति तुदते ।

[२५२] भ्रस्जौ ञ श पाके । भृज्जति अभ्राक्षीत् ।

### ७५१ । भ्रस्जोऽरे णौ भर्ज वा ।

भ्रस्ज ६।, अरे ७।, णौ ७।, भर्ज ।१।, वा ।१। ।

बभर्ज बभ्रज्ज बभर्ज्ज बभ्रज्जे ।

[२५३] मुच लौ ञ श प मोक्षे ।

[७४१] नुण् रध इति नुण् । मुञ्चति । अमुचत्, अमुक्त ।

[२५४] ञि लिपौ ञ श प लेपने ।

अलिपत् । अलिपत अलिप्त । [२५५] षिचौ ञ श प उक्षणे ।

निषिञ्चति । न्यषिचत्, न्यषिचत न्यषिक्त । निषिषेच ।

[२५६] कृतौ शप छिदि ।

[७३८] नृत्कृदितीम् वा, कर्त्तिष्यति कर्त्स्यति ।

[२५७] षू श क्षेपे । विषुवति व्यषावीत् ।

[२५८] व्रश्चू श च्छेदे ।

वृश्चति । अव्रश्चीत् अव्राक्षीत् । वव्रश्च वव्रश्चतुः ।

---

तुदतीत्यादि शप्रत्ययस्य ङित्त्वात् न गुणः । भृज्जतीति ग्रहस्वपाद्योरिति जिः अभ्राक्षीदिति स्यादे सलोपे भ्रस्जादिति षडि षढो कः से अनिमत्त्वाद् वृद्धि ॥७५०॥

भ्रस्जो भर्ज वा स्यात् अरे गुणसाधनयोग्ये । भ्रस्जधातोः परेऽप्रत्यये ञिाते गुणिनी रस्यासम्भवात् एव णौ इत्युक्तेऽपि अरप्राप्तौ अरे इत्युक्त ज्ञापयति क्वचित् अरे गुणिन्यपि भर्जादेशो न स्यादिति तेन टाम् अभ्राक्षीदित्यादिकमेव । बभर्ज इति ठा एकारस्य स्यात् व्यपित् किदे ति कित्त्वाभावपक्षे गुणसाधनयोग्यत्वे सति भर्जादेश. पक्षे बभ्रज्जे कित्त्वेऽपि ठा नवे प्रच्छामिति जेर्निषेध. । मुञ्चतीति मुचादित्वात् नुण् । अमुचदिति लृदित्त्वात् ङ । अमुक्तेति आत्मनेपदे ङस्याप्राप्तौ सि. । औदित्वादिमोऽभावे इगुङ्करिति सेः कित्त्वान्न गुण ततः सेर्लोप. ।

[ २५९ ] ऋच्छश्च गमनमोहकाठिन्येषु।

## ७५२। ऋच्छो णुङ्याम्।

ऋच्छः ६।, णः १।, ठ्याम् ७।

आनर्च्छ। [ २६० ] कॄश विक्षेपे। [ ६२८ ] ऋदिरणा-विति इर्। किरति। चकरतुः। करीता करिता।

## ७५३। प्रत्युपोपात्कः सुम् हिंसाच्छेदे।

प्रति उप उपात् ५।, कः ६।, सुम् ।१।, हिंसा च्छेदे ७।

प्रत्युपाद्धिंसायाम् उपाच्छेदे किरतेः सुम् स्यात्। प्रति-स्किरति उपस्किरति।

---

अलिपदिति वक्तव्यस्येति ङ.। अलिपत अलिप्तेति लिब्भ्यस्तु मे इति वा ङ। निषिञ्चति इति मुचादित्वात् नुण् गौक इति षत्वम्। न्यषिचतेति लिब्भ्यस्तु मे इति ङी वा निषिषेच दशस्यादेरिति षत्वम्। विषुवति इति गौक इति षत्व शुध्वोरित्युव्। व्यषावीदिति वेमूदित्यत्र सूतिसूयग्रहणात् अस्मान्नित्यमिम्। व्रश्च तीति ग्रहस्वपाद्योरिति जि.। अव्राचीदिति इमोऽभावपक्षे शक्रुजेति षडि निमित्तापाये नैमित्तिकस्याप्यपाय इति न्यायात् चकारनिमित्तकस्य शस्य पुनर्दन्त्यत्वे स्यादे सोलोप षढौ क से इति कै क्विलादिति षत्वे अनिमत्वात् ढ्डि। वव्रश्चतु-रिति ठ्या नवैप्रच्छाम् इति जेर्निषेध ॥ ७५१ ॥

ऋच्छो ण स्यात् ठ्याम्। सर्वत्र णपादौ बलवत्त्वादादौ द्वोऽच इति द्विर्भावे लघूङ्गोऽभावात् अतुसादेश्च कित्त्वादप्राप्तौ ठौमात्रविधिरयम्। न च प्रकृते पूर्व पूर्वं स्यात् अन्तरङ्गतर तथा इति न्यायात् गुणस्यैव बलवत्त्वमिति वाच्यम्। विच्छा यति इत्यत्र गुणादपि विशेषत्वेन द्विर्भावस्य बलवत्त्वदर्शनात्। आनर्च्छ आनर्च्छतु आनर्च्छुरित्यादि। चकरतुरिति ऋतो ण कित् ठ्याम् इति गुण। करीतेति वॄतोवेमोर्घोऽठीति वा दीर्घ.॥ ७५२ ॥

प्रतिश्च उपश्च प्रत्युप प्रत्युपश्च उपश्च प्रत्युपोप तस्मात्। हिंसा च छेदश्च हिंसाच्छेद तस्मिन्। प्रतिस्किरति हिनस्तीत्यर्थ। परि नि वि सेवसुमेति उक्तेर्न च उपस्किरति हिनस्ति छिनत्ति वेत्यर्थ.॥ ७५३ ॥

[२६१] तृन्प श प्रीणने।

### ७५४। तृन्पां न-लुक् वा श-णौ।

तृन्पा ६।॥, न ।१। लुक् ।१।, वा ।१।, श-णौ ७।।

तृन्प तुन्प तृन्फ तुन्फ रिन्फ गुन्फ दृन्भ उन्भ शुन्भां नकारस्य लुक् वा स्यात् शे णौ च। तृपति तृम्पति [२६२] चृती श प हिंसे। चर्त्तिष्यति चर्त्स्यति। [२६३] प्रच्छी श ज्ञीप्से। पृच्छति। अप्राक्षीत्। पप्रच्छ पप्रच्छतुः।

[२६४] सृजी श विसर्गे।

अस्राक्षीत्। ससर्जिथ सस्रष्ठ। [२६५] टु मस्जी श स्नाने। मज्जति अमाङ्क्षीत्। [२६६] स्पृशी श स्पृशि।

अस्प्राक्षीत् अस्पार्क्षीत् अस्पृक्षत्। [२६७] विच्छ श गतौ। विच्छायति विच्छति। अविच्छायीत् अविच्छीत्।

[२६८] मृशी श स्पृशि। अम्राक्षीत् अमार्क्षीत् अमृक्षत्।

[२६९] इषु श वाञ्छे।

इच्छति [६०६] वेमसहेतीम् वा, एषिता एष्टा।

---

बहुवचनं गणार्थं गणश्च। तृन्पतिस्तृन्फतिश्चैव तुन्फतिस्तुम्फतिस्तथा। गुम्फति-र्दृन्फतिश्चैव रिन्फति शुन्भतिस्तथा। उन्भतिश्चैव विज्ञेयस्तृन्पादिर्नवभिर्गणः। एषां नस्य लुक् स्याद्वा शप्रत्यये परे गुणसाधनयोग्यप्रत्यये परे च इत्यर्थः। शे यथा तृपति तृम्पति तृफति तृम्फति तुपति तुम्पति तुफति तुम्फति गुफति गुम्फति दृफति दृम्फति रिफति रिम्फति शुभति शुम्भति उभति उम्भति। णौ यथा तर्पयति तृम्पयति तर्फयति तृम्फयति तोपयति तुम्पयति गोफयति गुम्फयति दर्फयति दृम्फयति रेफयति रिम्फयति शोभयति शुम्भयति ओभयति उम्भयति। गवि कर्त्तरि प्राक्तुन्पते सुम्वक्तव्यः। प्रस्तुम्पति गौः। अन्यत्र प्रतुम्पति अश्व। पृच्छतीति ग्रहस्वपाद्यो-रिति जिः। अप्राक्षीदिति शक्लाजेति षडि षढो. क. से के अनिमत्वात् वृद्धि। पप्रच्छतुरिति ठ।। नवेप्रच्छाम् इति जेर्निषेधः। अस्राक्षीदिति सृजदृशोस्तु नित्यमिति ऋद्र.। ततो वृद्धि.। ससर्जिथ इत्यादि सृजदृशेति वेम्। अमाङ्क्षीदिति नुषं रध

[ २७० ] कुट शि कौटिल्ये ।

### ७५५ । कुटां णुव्री ञ्णिति ।

कुटा ६॥, णु-व्री १॥, ञ्णिति ७।

**कुटादेर्णुर्व्रिश्च स्यात् ञिति णिति च, नान्यत्र । अकुटीत् चुकोट । [ २७१ ] व्यच शि व्याजे ।**

**विचति । विव्याच, विविचतुः ।**

---

इति णुण् स्यादे सौलोपं चुङ्ञिति कुडि नस्यानुस्वारे ञपे ञमौ । असाची-दित्यादि क्षषन्तषस्पृशेति सिर्वा वद्रोऽक्विदिति च्द्री वा सेरप्राप्तौ सक् । विच्छा-यतीत्यादि विच्छास्तुतिपण इति वाय । आयान्तत्वात् सनञ्ग्रादिर्धु पुनर्धातु-सञ्ज्ञाया तिप्शपौ आयस्याप्राप्तिपक्षे श एव । तेन विछायन्तो कुले स्त्री वा इत्यत्र अपयन इति नुण् । विच्छती विच्छन्ती कुले स्त्री वेत्यत्र आटीपोरिति नुण् वा । असाचीदित्यादि पूर्ववत् इच्छतीति स्यादानेति इच्छादेश ॥ ७५४ ॥

ञ च ण च ञ्णौ ञ्णावितौ यस्य ञ्णित् तस्मिन् । ञित्णितौ. परयो गुणवृद्ध्यौ सिद्धौ पुनर्विधान नियमार्थम् । तेन कुटादीना ञित्णिद्भ्याम् अन्यत्र गुणवृद्धी न स्त इति नियम । ञित्णितोस्तु गुणसामग्र्या गुण वृद्धिसामग्र्या वृद्धि स्यादित्यर्थ । यथा कुट शि कौटिल्ये इत्यादीना अकुटीत् कुटिष्यति कुटन-मित्यादौ न गुणः । नू शि स्तवने इत्यादीनाम् अनुवीदित्यादौ न वृद्धिर्न च गुणः । अगुणत्वादुव् च । एवं नुविष्यति नुवनमित्यादौ च बोध्यम् । ञित्णितोस्तु कोटयति चुकोट इत्यादौ गुण एव । नावयति नुनाव इत्यादौ वृद्धिरेव । कुटा-दिश्च कुटि घुटि चुटि तुटि पुटति च्छुटयस्त्रुटि मुटि त्रुठि कुडति गुडय. घुडि चुडि तुडि थुडि भ्रुडति द्रुडय. स्फुडि वुडि लुडति स्थुडति स्फुडयः । व्यचशि-व्याजे कुचि गुजि हुडयः चुलि गुरति च्छुरति पुडि ब्रुडयः । स्फुरति स्फुलती क्रड क्रडि रुफयः । कूगूनूदीर्घा. सकलाः कुवतिर्गुवतिधुवतिश्चैते ङस्यान्ता इति धीरो-क्तौ । द्वाचत्वारिंशत्सङ्ख्याता धातव एव कुटादावुदिता । लिखतिर्मिलति-र्वोविह कश्चित् व्यस्यातामिति वदति विपश्चित् । तेन लिखितुं विश्वसृजोऽपि अक्षिहानिरित्यादि एवं लिखन लेखन लिखितव्य लेखितव्यम् इत्यादयः प्रयोगाः । इवं मिलिष्यति । महापातकिनः प्रच्छमिलितव्य न तै. सह इत्यादि । एवञ्च

## ७५६ । व्यचो जिरञ्णि दसि ।

व्यच ६।, जिः १।, अञ्णिदसि ७।

विचिता । [ ३७२ ] त्रुट श्चि च्छेदे । त्रुट्यति त्रुटति ।
[ २७३ ] स्फुर श्चि स्फूर्त्तौ । निष्फुरति निस्फुरति ।
एवं [ २७४ ] स्फुल श्चि स्फूर्त्तिं चलनयोः ।
[ १७५ ] नू श्चि स्तवने । अनुवीत् । नुनाव ।
[ २७६ ] मृ ङ श्च मृतौ ।

## ७५७ । मृङष्टीढ्ये मम् ।

मृङ ५।, टीढ्ये ७।, मम् १।

व्या व्यामत्ये च मृङो म स्यात् । [ ६२० ] ऋद्धिः श्यक् ढीपे । म्रियते, अमृत, मृषीष्ट । एषु किम् । ममार, मरिष्यति ।

---

व्यालनिलयमिलनेन गरलमिव कलयति मलयसमीर इति जयदेव' । विचतीति ग्रहस्पाद्योरिति जि विविचतुरिति व्ययग्रहेति खेर्जि. ग्रहस्पाद्योरिति मूलस्य जि ॥७५५॥

ञ च ण च ञ्णौ ञ्णावितौ यस्य स ञ्णित् । जि्णश्च अस् च ञ्णिदस् तस्मिन् । व्यचो जि. स्यात् न तु ञिति णिति असि च । विचिता विचिष्यति विच्यते विव्याच विविचतु' । ञ्णिदसि तु व्याचयति व्याचक' उरुव्यचा त्रुट्यतीति क्रमक्लमेति श्यन् वा । निष्फुरति विस्फुर्भूति षत्व वा । अनुवीदिति कुटादित्वात् गुणवृद्ध्योर्निषेधेस्नु्ध्वोरित्युव् ॥७५६॥

टी च ढी च अश्च टीढ्य' तस्मिन् विषयसप्तमीयम् । मृङो ङित्त्वेऽपि व्या व्याम् अत्ये च विषये म स्यादिति नियम । म्रियते म्रियेत अमृत मृषीष्ट अन्यत्र ममार मर्त्ता मरिष्यति अमरिष्यत् केचित्तु मृङो ङानुबन्धाभावेऽपि टीढ्ये मविधानादन्यत्र परस्मैपदे सिद्धे ङित्करणादात्मनेपदस्य प्राप्तौ परस्मैपद कुत्रचिद्भवति । आत्मनेपदमिच्छन्ति परस्मैपदिना क्वचिदिति न्यायो लभ्यते तेन स एवाय नागः सहति कलभेभ्य. परिभवमिति । विद्या धन मनुष्याणा मृतेऽप्यनुगच्छते इत्यादि सिद्धमित्याह. ॥७५७॥

[ २७७ ] ओ विजी ङ श भी-कम्पे ।

७५८। विजेर्णुर्नेमि ।

विजे ६।, णु १।, न ।१।, इमि ७।।

विजेणु: न स्यात् इमि । अविजिष्ट ।

इति तुदादिपाद: ।

इति प्रथम चतुर्गणाध्याय: ।

---

अथ द्वितीय चतुर्गणाध्याय: ।

प्रथम: पाद:—रुधादि: ।

[ २७८ ] रुधिरी ध ञि आवरणे । रुणद्धि ।

७५९। नणो न्रेऽणौ ।

नण ६।, न् ।१।, रे ७।, अणौ ७।।

नणो नकार: स्यात् अणौ रे। रुन्ध: रुन्धन्ति। अरुणत्, अरुणः अरुणत्। अरुधत् अरौत्सीत्। [ २७९ ] छृदु ञ धिव् देवने। [ ७३९ ] छर्दिष्यति छर्त्स्यति। एव [२८०] तृदु ञ धिर्नादरे।

---

इति प्रथम चतुर्गणाध्याय ।

विजे: क्ङिदिमित्यनेनैवेष्टसिद्धौ णुर्नेमीति गौरव स्पष्टार्थम् । अविजिष्ट विजिष्यते विजिता ॥७५८॥

इति तुदादिपाद ।

---

रुणद्धीति रुध तिप् नण् ढभात्तथोरिति तस्य धे झप्झसीरिति धस्य द: षृ्र्णं इति णत्वम् ।

अरे नणोऽसम्भवात् रे इति स्पष्टार्थम् । रुन्ध इत्यादौ दकारस्य वा लोप । इति पूर्वमुक्तं त्रयाणामेकवर्ग्याणां मध्यमस्तत्र लुप्यते इति प्रमाणात् । णत्वाभाववीजन्तु षृ्र्णं इत्यत्र लिखितम् । अरुणदित्यादि हसाङ्ग्रामिति सेर्लोपे झप्झसोरिति धस्य तो दो वा । पचे घ्यां सौ रवादधोरिति धस्य रेफे रेफस्य विसर्ग: । उभयत्र षृ्र्णं इति णत्वम् । अरुधदित्यादि इरित्त्वात् ङी वा । पचे व्या सौ औदित्त्वान्नेम् अनिमत्त्वात् वृद्धि: । छर्दिष्यतीति रुतृद्छदितीम् वा ॥७५९॥

[२८१] तृह ध हिंसे।

७६०। तृहः इण् पिद्धसे।

तृह ६।, इण् ।१।, पित् हस् रे ७।

तृहो नण इण् स्यात् पिति हसे रे। तृणेढ़ि तृण्ढः तृंहन्ति। अतर्हीत् अतृचत्।

[२८२] हिसि ध कि हिंसे।

७६१। नणो न लोप्यः।

नण ५।, न ।१।, लोप्य १।।

हिनस्ति [२८३] अन्‌ज ध जि व्यक्ति गति स्रचणे। अनक्ति।

७६२। अञ्जः सेरिम्पे।

अन्‌ज ५।, से ६।, इम् ।१।, पे ७।

अन्‌जः परस्य से' इम् स्यात् पे। आञ्जीत् आनञ्ज।

[२८४] ञि इन्धो ङ ध दीप्तौ। इन्धाञ्चक्रे।

इति रुधादिपादः।

---

पिच्चासौ हस् चासौ रश्चेति पिद्धस तस्मिन्। अत्राप्यरे नणोऽसम्भवात् रे इति स्पष्टार्थम्। तृणेढीति तृह हिंसे तिप् नण् अनेन नणोऽन्त्याच' पर इण् तृणेहि इति स्थिते हो ढो भौ ढभात्तथो ष्टुभिरिति ढ्रोढ्रीँति॥ तृण्ढ इति नणोर्न्ऽणो इति नकारे ष्टुभिरिति णत्वम्। अतर्हीदिति नित्यमिम्। अस्योदित्त्व तुदादि- एव एव न रुधादिपचे अतएव कातन्त्रगणे रुधादौ तृहहिंसि हिंसाया इति तुदादौ तु तृ ह्र ङ् तृह्न तृनह्न हिंसायां इति। कविकल्पद्रुमे तृहध तृणह्न श्च हिंसे इति रुधादिपचेऽप्युदनुबन्ध केषाञ्चिदनुरोधात् ॥७६०॥

ननो न परो नकारो लोप्य स्यात्। हिंसि ध कि हिंसे हिनस्ति एव भञ्जधौ भनक्ति उन्दधौ उनक्ति अञ्जूधजि अनक्ति ॥७६१॥

ऊदित्त्वादेमत्वे नित्यार्थं विधानम् आञ्जीत् से अन्यत्र अञ्जिष्यति अङ्‌क्ष्यति अञ्जिता अङ्‌क्ता आनञ्जेति स्यान्तादादीति खेरान्। इन्धीञिधङ इन्धे इन्धाञ्चक्रे इति विंजादीत्याम् ॥७६२॥

## द्वितीयः पादः—तनादिः।

[ २८५ ] तनु ञ द विस्तृतौ।

तनोति तनुतः तन्वन्ति, तन्वः तनुवः तन्मः तनुमः।

### ७६३। सेर्लुक् त-थासो स्तनृभ्योऽकुर्वा।

से ६।, लुक् ।१।, त-थासो ७॥, तनृभ्य ५॥, अकु ५।, वा ।१।।

कुवर्जात् तनादेः सेर्लुक् स्यात् वा त-थासोः परयोः। अतत अतनिष्ट, अतथाः अतनिष्ठाः। [ २८६ ] षनु ञ द दाने।

सनोति। असात असनिष्ट, असाथाः असनिष्ठाः। सायात् सन्यात्।

[ २८७ ] क्षणु ञ द बधे। अक्षणीत्।

[ २८८ ] क्षिणु ञ द हिंसायाम्।

### ७६४। नोप्युङो गुर्वात्वृतः।

न ।१।, उपि ७।, उङ ६।, गु १।, वा ।१।, तु ।१।, ऋत ६।।

क्षिणोति। [२८९] ऋणु ञ द गतौ। ऋणोति अर्णोति।

[ २९० डु कृ ञ द करणे। करोति।

---

तनोति इति तनृभ्य. ग्रुमेधे इति ग्रुप् तन्व इत्यादौ लुपोऽस्येति उकार-लोपो वा।

तश्च थास् च तथासौ तयोः। थास् साहचर्य्यात् तकार आत्मनेपदस्यैव ग्राह्य। अन्यथा तकारमात्रप्राप्तौ परस्मैपदस्य तां त त एषु अतानिष्टाम् अतानिष्टम् अतानिष्ट एष्वपि प्रसक्तिः। किञ्च तयोरित्युक्तावपि थकारसाहचर्य्यात् आत्मनेपदीयतकारस्यैव प्राप्तौ थास् ग्रहण स्पष्टार्थम्। अतत इत्यादि सेर्लुकि वनतनाद्यनिमा अम् लोप.। लुक् करणात् त्यलोपे त्यलक्षणमिति न्यायात् गुणि सौ परे विहितस्य कार्य्यस्य निषेधेऽगुणिनोस्तथासो परयो. अम्लोपः। अकु. किम्। अकृत अकृथा. उभयत्र इगुङ्मढौसि. कित्वात् गुणाभावे भ्रस्वादिति सेर्लोपः। असातेत्यादि सेर्लुकि खनसनजनामिति ङा। पक्षे सेरिम्। अक्षणीदिति ह्रस्वादेः क्षेम इत्यत्र क्षणवर्जनात् न त्रि. ॥७६३॥

## ७६५। कुरुवलोपो म्वेय।

कु ५।, उव्-लोप १।, म्वेय ७।।

कुर्वः कुर्मः, कुर्य्यात्। चकृव।

## ७६६। सम्परेः सुमुपात्तु भूषा-सङ्ग-प्रतियत्नविकृताध्याहारे।

सम्-परे ५।, सुम्।१।, उपात् ५।, तु।१।, भूषा-सङ्ग-प्रतियत्न-विकृताध्याहारे ७।।

आभ्यां कृञः सुम् स्यात् उपात्तु भूषादावर्थे। संस्करोति, समस्कृषातां, सञ्चस्करिथ, सञ्चस्करिव, संस्क्रियात् सस्कृषीष्ट। परिष्करोति पर्य्यष्कार्षीत् पर्य्यस्कार्षीत् उपस्करोति।

---

उपि परे उङो गुणं स्यात् उङ ऋकारस्य तु वा। यथा चिण दु ञ बधे चिणोति ऋतस्तु ऋणदु ञ गतौ ऋणोति अर्णोति घृणदु ञ दीप्तौ घृणोति घर्णोति तृण दुञ भचे तृणोति तर्णोति। उङ कि करोति॥ ७६४॥

म च व च य च म्वय तस्मिन्। कृञ परस्य उपो लोप स्यात् मे वे ये च। कुर्व इत्यादि वमयेषु उपो लोप.। व्यंनच्तयोक इत्यत्र कुर्वर्जनात् न दीर्घं। करोमीत्यत्र स्वरादेशस्य बलवत्त्वात् गुण एव। चकृवेति नेमसुमिति निषेधात् नेम्॥ ७६५॥

सम् परिभ्या कृञ सुम् स्यात्। अर्थानभिधानेऽपि भूषण एव कातन्त्रसचिन्नसारैकवाक्यत्वात्। भूषणादन्यत्र सकरोति परिकरोति। उपात् तु भूषणादौ भूषणमङ्गलकरण सङ्ग समूहः। प्रतियत्नो गुणान्तराधानं विकृत स्वरूपस्यान्यथात्वम् अध्याहारो वाक्यस्य अश्रुताकाङ्क्षितशब्दोपादानम्। समस्कृषाताम् इति स्याद्यृद्दृ-रित्यत्र स्कृवर्जनान्न वेम्। इगुङुर्मढीति से किस्वान्न गुणः। सचस्करिथेति नेमृतस्थप इत्यत्र स्कृवर्जनादिम्। सस्क्रियादिति स्याद्यृत्तुरत इत्यत्र स्कृ स्कृभ्यामेवेति उक्तो गुणनिषेध ऋद्रि. श यक्ढीपे इति रि। सस्कृषीष्टेति इगुङुर्मढीति से किस्वात् न गुणः। परिष्करोति इति परिनिविसीवेति षत्वम्। पर्य्यष्कार्षीदित्यादि निविप्ररिस्वनूजेति वा षत्वम्॥ ७६६॥

**७६७। हस्ते पाणौ प्राध्वं जीविकोपनिषदो व्यस्य कृञि स-स्तिरो मध्ये पदे निवचने मनस्युरस्युपाजेऽन्वाजे साक्षादादेस्तु वा।**

हस्ते उपनिषद' ६।, व्यस्य ६।, कृञि ७।, स १।, तिरस्—साक्षादादे' ६।, तु।१।, वा।१।।

हस्तेकरोति, तिरस्करोति करोति-तिरः।

इति तनादि पादः।

---

## तृतीयः पादः—क्रयादिः।

---

[ २८१ ] डु क्री ञ ग द्रव्यविपर्य्यये।

क्रीणाति। [ ७८१ ] श्नाद्दगोरिति क्रीणन्ति।

[ २८२ ] स्कु ञ ग न उद्धृतौ।

हस्ते इत्यादेरुपनिषदन्तस्याऽव्ययस्य कृञधातौ परदे नित्य समास स्यात् तिर-प्रभृतेस्तु वा। समासोऽप्येकपदीभावमात्रम्। न तु द्वन्द्वादेरेकतम। समास करणञ्च पूर्वनिपातनियमार्थं क्त्वो यबर्थञ्च। हस्ते पाणौ स्वीकारे। हस्तेकृत्य स्वीकृत्य इत्यर्थ। ता हस्तेकृत्यमाश्वसीरिति भट्टि। प्राध्व बन्धनानुकूल्ये प्राध्व कृत्य। जीविकोपनिषदौ उपमायाम्। जीविकाकृत्य जीविकामिव कृत्वा इत्यर्थ। तिरोऽन्तर्द्धाने तिरस्कृत्य। उरसि मनसि मध्य पदे निवचने इति पञ्चानुपश्लेषे उरसिकृत्य उरसिकृत्वा। अनुपश्लेष इति किम्। उरसिकृत्वा हस्त शेते पदे कृत्वा शिर. शेते श्वा। उपाजे अन्वाजे दुर्बलस्य बलाधानार्थे साक्षादादेरभूत तद्भावे। साक्षात्कृत्वा साक्षात्कृत्य। साक्षादादिस्तु साक्षात् मिथ्या आस्था श्रद्धा अन्तर्द्धा प्रभाऽचला चिन्ता प्रमा प्रजा विजा रुजा रुहा मध्यस्था नमस् आविस् प्रादुस् बहिस् इत्यष्टादश। अग्नौ वशे विकल्पने विहसने प्रपतनेऽर्थे इत्या दीनामपि वा समासमिच्छन्ति नौमरा.। वशेकृत्य दशग्रीव मोदस्व वरमन्दिरे इति भट्टि. ॥ ७६७ ॥

७६८। स्कु स्कन्भु स्कुन्भु स्तन्भु स्तुन्भुभ्यः श्नुश्नौ घे रे।

स्कु—स्तुन्भुभ्य ५।॥, श्नु श्नौ १॥, घे ७।, रे।।

एभ्यो घेऽर्थे श्नुः श्ना च स्यात् रे परे। स्कुनोति स्कुनाति, विस्कभ्नोति [ ६२५ ] विस्कभ्नेति षः विष्कभ्नाति। एव विस्कुभ्नाति विस्कुभ्नोति, विष्टभ्नाति विष्टभ्नोति, व्यष्टभत् व्यष्टभ्नोत् वितष्टम्भ। स्तुभ्नोति स्तुभ्नाति। [ २९३ ] मी ञ ग वधे।

[ ७४५ ] मिम्योरिति ङा, अमासीत् अमास्त।

[ २९४ ] पू ञ गि शोधने।

७६९। प्वादेः स्वो ने व्र्यादेस्तु वा।

पू आदे ६।, स्व. १।, ने ७।, व्री आदे ६।, तु ।१।, वा ।१।।

प्वादीनां स्वः स्यात् ना त्ये परे व्र्यादेस्तु वा। पुनाति।

[ २९५ ] कॄ ञ गि हिंसे।

अकरीष्ट अकरिष्ट अकीर्ष्ट। करिषीष्ट कीर्षीष्ट।

[ २९६ ] धू ञ गि कम्पे। धुनाति। अधावीत् अधीषीत्।

[ २९७ ] ग्रह ञ ग आदाने। गृह्णाति।

---

स्कु य अप्लुतौ स्तन्भु स्कन्भु स्कुन्भु य रोधने इति चत्वार सौत्रा.। यः पूर्वधातुपाठे न दृश्यते सूत्रे दृश्यते स सौत्र.। विस्कभ्नातीत्यादि विस्कभ्नानिर्वेति सूत्रे श्नाप्रत्ययस्य ग्रहणात् विस्कुभ्नोतीत्यत्र न षत्वम्। विष्टभ्नातीत्यादि उभयत्र गौक इति षत्वम्। व्यष्टभदित्यादि। शासलिदृद्युदिति ङीवा उभयत्राप्यपीति षत्वम्। वितष्टम्भेति दृशस्यादेरिति खिव्यवधाने षत्वम्। प्रमीणातीति थादिहृन्मीनेति णत्वम् ॥७६८॥

ने श्नाप्रत्यये परे इत्यर्थ। प्वादिस्तु पूञगि शोधे लूञगि छेदे कॄञगि हिंसे, स्तॄञाच्छादे, धूञगि कम्पे, वृगिञ वरणे, भृगि स्तृगि व्याप्तौ हनने। मृगितु धातुः कथितो इत्या पृगितु रचे पूरणइत्याम्। वृगि व्रीगितु विदितौ इत्या दृगि विदारे

## ७७०। हसान्नानो ह्नौ।

हसात् ५।, ना ।१।, आन १।, ह्नौ ७।।

हसात् परो ना आनः स्यात् ह्नौ परे। गृहाण। अग्रहीत्। जग्राह जगृहतुः जग्रहिथ।

## ७७१। ग्रहेरिमो घोऽव्याम्।

ग्रहे' ५।, इम ६।, घ' १।, अव्याम् ७।।

ग्रहे. परस्य इमो घः स्यात् न तु व्याम्। ग्रहीता।

[ २९८ ] शॄ अ गि हिंसे।

## ७७२। शॄ पॄ द्रां ख्वो वा कित् व्याम्।

शॄ पॄ द्रा ६।।।, ख्व १।, वा ।१।, कित् व्याम् ७।।

एषां ख्वः स्यात् किति व्या वा। शश्रतु' शशरतुः।

ज्ञागित् नीत्या भृगित् भर्त्से जॄ वद्धत्वे गॄगितु शब्दे ज्यागि जीर्णत्वे रीगि रेषणगतयो- र्ऋगिगत्या लीगि ल्वीगि श्लेषणक्रया व्रीगगि वरणे ल्वीगगि गत्या श्लीगगि धातु कथितो भत्याम्। पञ्चाधिकविंशतिरिति गदिता प्वादिगणे धातव इह विदिता। इति। शेषास्त्रयो न प्वादय इति दुर्गसिंहः। प्वादय इति जैनेन्द्राः। उभयानुरोधात् ऋादेर्विकल्पः। ज्यागि जरायां इत्यस्य प्वादिफलन्तु जीनः जीनवानित्यत्र ल्वादि- त्वात् तस्य न.। क्वचिन्नाप्रत्ययस्यापि ह्रस्व इति वररुचिः। स्मरणात् पुनते पाप- धारणात् पूर्वसञ्चितम्। दर्शनात् लभते मोक्षमेतद्योगस्य लक्षणमिति प्रयोग.। अकरीष्टेत्यादि ख्यादयृदॄहुरिति इम् पक्षे वॄतोवेम इति वा दीर्घ'। इगु ष्टुरिति से. किस्वे ऋकारस्य इरिव्यंनच्तयीति दीर्घ। अधावीदित्यादि वेमूदिदितीम् वा ॥७६९॥

ना आन इति षोभय लुप्तप्रथमैकं सूत्वात् सिलुक्। गृहाणेति ग्रहस्वपाद्यो रिति नि.। आने कृते अकाराद्र्लोप.। एव पुषाण मुषाण इत्यादि। हसात् किं जानीहि। अग्रहीदिति हान्तत्वात् न त्रिः। जगृहतुरिति ग्रहस्वपाद्योरिति जि ॥७७०॥

ग्रहीता ग्रहीतुम्। व्यान्तु जग्रहिथ जगृहिव ॥७७१॥

एवं ( २९९ -३०० ) ञि पॄ गि पालने, दॄ गि विदारे ।
( ३०१ ) ज्या गि जरायाम् । जिनाति जिज्यौ ।
( ३०२ ) व्री गि वृत्याम् । व्रिणाति व्रीणाति ।
( ३०३ ) ज्ञा ग बोधे । जानाति । ( ३०४ ) श्रन्थ ग मोचे ।
श्रथ्नाति । श्रेथतुः शश्रन्थतुः श्रेथिथ शश्रन्थिथ ।
एव ( ३०५ ) ग्रन्थ ग गर्भे । ( ३०६ ) कुष ग निष्कोषे ।
( ५७३ ) वेमूदितीम् वा, निरकोषीत् निरकुक्षत् ।
( ३०७ ) अश ग भोजने । अशिता अष्टा ।
( ३०८ ) वृङ ञ ग वरणे ।
अवरीष्ट अवरिष्ट अवृत । ववृषे । वरिषीष्ट वृषीष्ट ।
इति क्र्यादिपादः ।

---

शॄगि हिंसने, ञिपॄगि पालने, दॄषगि विदारे एषां स्व स्याद्वा किति व्याम् । शशरतुरिति ह्रस्वाभावपक्षे ऋतो णु कित् ठ्रामिति गुण एव पप्रतु पपरतुः दद्रतु ददरतु. । व्रिणातीत्यादि व्र्यादेस्तु वेति वा ह्रस्वः । जानातीति ज्ञादानेति जादेश' । श्रथ्नातीति हसुङ्न इति न लोप. । श्रेथतुरिति स्यात् ठ्रपिदिति कित् पक्षे न लोप खिलोपादिश्च । श्रेथिथेति श्रन्थग्रन्थदन्भामिति न लोपपक्षे खिलोपादि । निरकुक्षदिति वेमत्वादनिम् पक्षे हशष इति सक् । अष्टेत्यादि वेम्सहेतीम् वा । अवरीष्टेत्यादि स्याद्यृदॄदुरिति इम् पक्षे वृतोवेम इति वा दीर्घ । अनिम् पक्षे इगुङ्रिति से. कित्त्वात् न गुण । ववृषे इति नेमसुमिति नेम् । वरिषीष्ट इत्यादि स्याद्यृदॄदुरिति वेम् इगुङुरिति कित्त्वात् न गुण. ॥ ७७२ ॥

इति क्र्यादिपाद. ।

## चतुर्थः पादः—चुरादिः।

(३०९) चुर कि स्तेये।

### ७७३। चुर्भ्यो ञि र्वा।

चुर्भ्यः ५।३, ञि १।, वा ।१।।

**चुरादेः ञिः स्यात् वा स्वार्थे। चोरयति चोरयते। अचू-चुरत्। चोरयामास। चोर्य्यात्। पक्षे चोरति इत्यादि।**

---

वाशब्दस्य व्यवस्थावाचित्वात् चुरादिभ्यो ञिर्नित्यश्चुराद्यन्तर्गणाद् युजादेर्ञि र्वा स्यादित्यर्थः। यत्तु चुरधातोरपि पक्षे चोरतीत्याद्युदाहरणं तच्चुरादेर्ञे कदाचिदनित्यत्वज्ञापनार्थम्। एतदेव काव्यकामधेनौ धकिक् लक्षणीत्यत्र स्फुटीचकार वोपदेवः। यथा सिद्धे नित्यणिजन्तत्वान्नित्यनुम्त्वे कितामिदित्। निजानित्यत्व बोधार्थं न दृष्टोऽनुम् विधिः क्वचिदिति। अस्यार्थः—किता कानुबन्धधातुना नित्य णिजन्तत्वान्नित्यनुमन्वेऽगुणपरत्वाभावान्नलोपाभावे नित्यनकारवत्त्वे सिद्धे इदित इदनुबन्धकरणं णिचो ञेरनित्यत्वबोधार्थम्। किन्तु अनुम् विधिर्नकाराभाव क्वचिदपि न दृष्ट इति। अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति न्यायात् चुरादेः स्वार्थे ञि। चुरादिभ्यो ञेर्ञित्त्वेऽपि उभयपदं न स्यात् अन्यथा क्षमञ्जक् ञितर्कि इत्यादेर्ञानुबन्धो व्यर्थः स्यात्। तेन ञिच्चुरादेरात्मनेपदं ञितश्चुरादेरुभयपदम् उभयभिन्नचुरादेः परस्मैपदमिति। एवमेव धातुप्रदीपादयः। यत्तु चोरयति चोरयते इत्युभयपदोदाहरणं तद्धातुपारायणानुरोधार्थं कदाचित् प्रयुक्तस्यात्मने पदस्य समाधानार्थञ्च यथा नालोकते यथेदानीं मामियं तेन तर्कये इति नैषधे। चोरयतीति चुर ञिः गुण. धातुसंज्ञायां तिप् शप् गुणाः। अचूचुरदिति चोरि भागात् टीविभक्तेर्दौ ञिश्रीत्यङ् चोरीत्यस्य द्वित्वे रेलोप. झभखपेति चेरोकारस्य चकारे ञ्यब्युङः स्व इति मूलधातोरोकारस्य ह्रस्वे खे सन्वदिति चेरुकारस्य दीर्घे ञेर्लोपः। चोरयामासेति ञिनादेरित्याम्। चौर्य्यादिति ञ्या ञेर्लोपे यलोपे न्यलक्षणमिति न्यायात् गुणः॥ ७७२॥

[ ३१० ] कृत क संशब्दे।

७७४। कीर्त्तः कृतः।

कीर्त्त. १।, कृतः ६।।

कृतः कीर्त्तः स्यात् णौ। कीर्त्तयति।

[ ३११ ] गणत् क सङ्ख्याने।

७७५। हसाल्लोपोऽशित्यद् योः।

हसात् ५।, लोप १।, अशिति ७।, अत् यो' ६॥।

हसात् परयोः अकार-यकारयोर्लोपः स्यादशिति। गणयति।

---

कृत क संशब्दे इति धातु कीर्त्ति स्यात् सर्वत्र। कीर्त्तादेशस्य सार्वत्रिकत्वे कीर्त्तधातुपाठे नैवेष्टसिद्धौ कृतधातु पठित्वा कीर्त्तादेशविधान ज्ञापयति क्वचित् कीर्त्तादेशो न स्यात् इति। तेन अचीकृतदिति। क्रमदीश्वरोऽप्येवम् ॥७७४॥

अत च य च अद्यौ तयो'। अयोरिति लिपिकरप्रमादपाठ। अन्यथा इत् रहितेन अका सवर्णस्यावश्यग्राह्यत्वात् दास्यतीत्यादावाकारस्यापि लोपापत्तिः स्यात्। प्रकरणबलाद्धातुसज्ञकस्यैव अकार यकारयोर्लोप तेन हसतीत्यादौ न स्यात्। हसात् कि ? बोभूयिता अशिति कि ईर्ष्य ति। अरे इत्यनेनैवेष्टसिद्धौ अशितीति गौरव कथमिति चेन्न मव्यबन्धे इत्यस्य यङ् लुकि व्या याति परे ममव्यात् इत्यत्र यकारलोपानुपपत्ते। गणयतीति अकारलोपे लोपोऽप्यादेश उच्यते इति न्यायेन स्थानिवत्त्वात् न वृद्धि। एव कुणत्काभाषमन्त्रयोरित्यादीनां कुणयतीत्यादौ न गुण। अतएव अल्लोऽपित्व स्थानिवत्त्व चादन्तत्वप्रयोजनम्। यत्र त्वे ते न विद्ये ते तत्राल्लोपविकल्पनम्। तद्बलादन्त्यदीर्घश्च पु क्चेत्यज्ञापयत्यत इति वोपदेव'। अस्यार्थ अल्लोपित्व स्थानिवत्त्वञ्चेति उभयमदन्तत्वप्रयोजनम्। यथा अल्लोपित्वेन अजगवेषदित्यादौ न ह्रस्व सन्वद्भावौ स्थानिवत्त्वान्न गुणवृद्धी कुणयति गणयतीत्यादि यत्र तु एते न विद्येते अल्लोपित्वस्थानिवत्त्वयो प्रयोजनं न सम्भवतीति तत्र धातौ तद्बलात् अदन्तत्वस्वीकारबलात् अल्लोपविकल्पनम् अकारस्य स्थितिपक्षे 'दीर्घश्च पुक्च आदन्तत्वात् पण् च स्यादतोऽज्ञापयतीति सिद्धमिति केचित्। स्वमते तु अल्लोपित्वस्थानिवत्त्वयोः कार्य्य येषु न स्यात् ते

७७६। वेङ्गणकथः खि ञॆऽङि।

वा ।१।, ईङ् ।१।, गण कथ ६।, खे ६।, ञऽङि ७।।

गणकथयोः खेरीङ् स्यात् वा ञऽङि। अजीगणत् अजगणत्।

[६३८] अग्लोपित्वात् न इः।

[३१२] कथत् क वाक्यप्रबन्धे अचीकथत् अचकथत्।

इति चुरादिपादः।

इति द्वितीयचतुर्गणाध्यायः।

---

धातवो हसन्ता एव मन्तव्या'। तेन अङ्घापयतीति प्रयोग. स्वमतविरुद्ध इति बोध्यम्। न च स्वमतविरुद्धानां कामधेनौ उपन्यासोऽपि विरुद्ध इति वाच्यम्। अष्टाना मतान्यालोक्य कर्त्तव्ये परमतोपन्यासेऽपि दोषाभावात्। अन्यथा केश्चिदमन्यमानस्य कृञ् कृताविति भौवादिकस्यापि पाठो विरुद्ध' स्यात्। किञ्च यदि तन्मतेकवाक्यता क्रियते तदा अग्लोपविकल्पोऽल्यदीर्घश्च मनीषादित्वात् साध्य। यथा अङ्क ञि अकारलोपे अङ्कि टीविभक्तेर्दि अङ् नकारजावनुस्वारपञ्चमौ झलि धातुषु इति ङस्य न प्रकृतिकत्वे स्वादौ नवद्र इति ङकार द्वित्वा कि इत्यस्य द्वित्वे कस्य चत्वे निमित्ताभावे नैमित्तिकस्याप्यभाव इति ङस्य नत्वे नस्यानुस्वारत्वे तस्य च ञत्वे आञ्चिकदिति अत्र कस्सन्वद्भावयोरसम्भवात् नाग्लोपित्व' गुणवृद्धोरसम्भवान्न स्थानिवत्त्वमिति। केचित्तु द्वित्वेऽप्यकारलोपस्य स्थानिवत्त्व मन्वाना' क इत्यस्य द्वित्वे अग्लोपित्वान्न सन्वत्कार्य्यमिति आञ्चकदित्युदाहरन्ति। अन्ये तु ङ्प्रकृति मन्वाना' ङ्कि इत्यस्य द्वित्वे कस्य लोपे आङ्किङ्कदित्याहु'। यकारलोपो यथा पापठ्य वावद्यादि यङन्तेभ्यः ञ्ग्ल्यादि इति अप्रत्यये आदौ हसाल्लोप इत्यकारलोपे पुनस्तेनैव यकारलोपे पापचा वावदा इत्यादि ॥ ७७५ ॥

गणकथयोः खि' गणकथखि. तस्य ईङ् स्याद्वा ञेः परेऽङि ङित्वा दन्त्यस्य स्थाने ॥ ७७६ ॥

इति चुरादिपादः।

तृतीय चतुर्गणाध्याय:।

## प्रथम: पाद:—ञान्त:।

---

### ७७७। ञि: प्रेरणे।

ञि १।, प्रेरणे ७।।

धो ञि: स्यात् प्रेरणेऽर्थे। कुर्वन्तं प्रेरयति कारयति। अचीकरत्। अशशासत्, अडुढौकत्। अशुश्रवत् अशिश्रयत्। व्यतस्तम्भत्, पर्य्यसोसिवत्। [५७२ साङ्गत्वात् न ष:। अचीचकासत् अचचकासत्। औन्दिदत् औब्जिजत् आड्डिडत् आर्चिचत् अररम्भत् अललम्भत्। अजोहवत्, [७४८] अनङ्गीत्युक्तेर्न घि.। अदिध्वनत् अध्वनयीत्, ऐलयीत् ऐलिलत्, आर्द्दयीत् आर्दिदत् औनयीत् औनिनत्।

---

प्रेरण त्वयैतत् क्रियतामिति क्रियासु नियोजनम्। यथा गुरुमन्न भोजयति भृत्यं ग्राम गमयति शिशु शाययति। अचेतने तूपचार। यथा भोजनाभावो वायु वर्द्धयतीत्यादि। धोरिति व्याख्यान सवधातुप्राप्त्यर्थम्। तेन भवन्त प्रेरयति भावयति कामयमान प्रेरयति कामयति चिकित्सयति चोरयति चिकीर्षयतीत्यादि। प्रेरण ञे परोऽपि ञि। यथा पिता पुत्रेण शिष्य वेद पाठयति अत्र पुत्र पाठयतेरेव कर्त्ता न तु पठते तेन पुत्रस्य कर्म्मत्व न स्यात् ञित्त्वादुभयपद कारयति कारयते पूर्वसूत्रोक्तान्युदाहरति अचीकरदित्यादि। कुर्वन्त प्रेरित् इति ञौ अतएव ञौ द्वित्वे ञिरिति वक्ष्यमाणनियमात् द्विर्भावात् पूर्वं न वृद्धि। कृ इति स्थिते धातुसज्ञाया दि अमागम ञिश्रीत्यडि कृ इति वर्णद्वयस्य द्वित्वे खेराद्यच इति इकारस्य लोपे झभखयेति ऋकारस्य अकारे ककारस्य चकारे ञ् खित्यन्ते जुडतोरिति वृद्धौ आद्युङ स इति आकारस्य ह्रस्वे. खे. सन्वद्वौ इति सन्वत्त्वे स्यसेसनीति अकारस्य इकारे प्रोश खेर्द्दसादेर्व्वश्चेति दीर्घे

**७७८। स्मृदृत्वरप्रथम्रदस्तृस्पशोऽङ्खेर्ञ्रङि चेष्टवेष्टो स्तु वा।**

स्मृ—स्पश ६।, अङ् ।१।, खे' ६।, ञ्रङि ७।, चेष्टवेष्टो ६॥, तु ।१।, वा ।१।।

**एषा खेरङ् स्यात् ञ्रङि चेष्टवेष्टोस्तु वा। असस्मरत् अददरत् अतत्वरत् अपप्रथत् अमम्रदत् अतस्तरत् अपस्पशत् अचिचेष्टत् अचचेष्टत् अविवेष्टत् अववेष्टत्।**

ञे लोपे दस्य तकारो वा। एवं सर्वत्र। अशशासदिति ञ्रङुङ स्व इत्यत्र शासवर्ज्जनान्न ह्रस्वः। अडुढौकदिति ऋदिद्वर्ज्जनात् न ह्रस्व। अशूशवदिति प्रागच्कार्य्यादिति नियमादादौ द्वित्वे श्वेर्ञिर्वेत्यत्र वाशब्दस्य व्यवस्थया श्विमूलस्य च ञिः ततो द्वित्वादि पक्षे न ञि'। व्यतस्तम्भदिति गुरुधात्वच्चरपरत्वान्न सन्वद्भावादि माङन्त्वात् न ष। पर्य्यसीषवदिति साङन्त्वात्पर्य्यादिनिमित्तका षं षत्व न स्यात् खिनिमित्तक मूलधातो षत्व क्षिलादित्यनेन स्यादेवेति श्रीपतिदत्तः। एव पर्य्यसीषहदित्यत्रापि बोध्यम्। अचचकासदित्यादि ऋदित्वादुङो ह्रस्वाभावे अनेकाच्त्वात् सन्वद्भावादि विकल्प.। औन्दिददित्यादि उन्दश्ौ क्लेदे उज आर्जवे अदुङ अभियोगे अर्चञ पूजे इति ञ्रन्तानां चतुर्णाम् उन्दि उजि अदुङि अर्चि इति स्थिते नाजन्तार्द्वेरिति आद्यचरं हित्वा स्यादौ नवद्र इति न ब द रांश्च हित्वा दि जि डि चि एषां द्वित्वम्। अररभदित्यादि ऋध् रध इति ऋधि गुरुधात्वच्चरपर-त्वात् न सन्वद्भावादि। अजौहयदिति ह्वेः खेरनडीत्यत्र अनङौत्त्वे संधिः। अध्वनयीदित्यादि ध्विध्वन रवे हलश सर्पे गतौ अर्दज वधे ऊनत्क परिहाणे एभ्यो ञ्रन्तेभ्य श्वि घंट ध्वन्यन्त्यर्द्वूनेस्तु वेति अङ् वा। पक्षे ञ्यां सौ चङि श्विजागृञ्रिरिति निषेधात् न ञ्रि ॥७७७॥

स्मृ स्मृतौ स्मृ म श्रौत्के इति द्वयम्। दृयगि विदारे। ञित्वर षमङ स्वदे। प्रथमयङ् चौदे स्तृङगि छादने स्पशञ ग्रन्थबाधयोः। एषां सन्नाना खेरङ् विधानसामर्थ्यात् स्यश्वेत्सनीति इ नं स्यात्। घोस्त खिङ्स्यादे घंसेत्यपि न स्यात्। चेष्टवेष्टोस्तु खेरङोऽप्राप्तिपक्षे गुर्वच्चरपरत्वात् सन्वद्भावस्याप्राप्तौ तदेकयोगनिर्दिष्ट-त्वात् खेर्दीर्घोऽपि न स्यात् ॥७७८॥

**७७९। भ्राज भ्रास भास भाष दीप जीव मील पीड़ कण वण भण श्रण लप लुप लुट हेठां वोङः स्वः।**

भ्राज हेठा ६।।।, वा ।।१।, उङ ६।, स्व १।।

एषाम् उङः स्वः स्यात् वा ञग्ङि। अबिभ्रजत् अबभ्राजत्।

**७८०। वर्दुङो धुः।**

वा ।।१।, ऋदुङः ६।, धु १।।

ऋदुङो धोर्धुरेव स्यात् वा ञग्ङि। अवीवृतत् अववर्त्तत्।

**७८१। स्वपो जिः।**

स्वप ६।, जि १।।

स्वपो जिः स्यात् ञग्ङि। असूषुपत्।

---

भ्राज ङ षृ टु भासि। भ्रास ङृषृ टु भासि दन्त्यान्तस्तालव्यान्तोऽपि। भासृ ङ दीप्तौ भाषङ्न्ऋ वाचि। दीपीङय् दीपने। जीव न्ऋ प्राणे। मील्ऋ निमेषे। पीड़्ऋक बाधगाहे। कणृ आर्त्तस्वरे। ऋवण शब्दे ऋभण शब्दे। श्रण क दाने। लप भावे। लुपृ श्रप लृ औ छेदे। ऋलुठ्य विलोटविलोडयोः"। हेठृ ञ बाधे षोऽङ्श्वेते। अबिभ्रजत् अबभ्राजत् अबिभ्रसत् अवभ्रासत् अबीभसत् अबभसत् अबीभषत् अबभाषत् अदीदिपत् अदिदीपत् अजीजिवत् अजिजीवत् अमीमिलत् अमिमीलत् अपीपिडत् अपिपीडत् अचीकणत् अचकाणत् अवीवणत् अववाणत् अबीभणत् अबभाणत् अशिश्रणत् अशश्राणत् अलीलपत् अललापत् अलूलुपत् अलुलोपत् अलूलुटत् अलुलोटत् अजीहिठत् अजिहेठत्। कविकल्पद्रुमे भ्रास-ङृषृ टु इत्यस्य सप्तमस्वरानुबन्ध श्रणक दाने इत्यस्य च अष्टमस्वरानुबन्धाभाव कस्यचिदनुरोधात्। हेठे इत्यस्येह सूत्रे पाठः प्रमाणशून्य एव ॥७७९॥

ऋत् उङ् यस्य स ऋदुङ् तस्य। तस्य स्थाने तज्जात्यादेशो ञग्ङि वा स्यादित्यर्थः। अवीवृतत् अववर्त्तत्। एवं अवीवृधत् अववर्धत् अमीमृजत् अममार्जत् अचीकृपत् अचकल्पत् क्वचित्तु ऋदुङ प्रकृतिकत्वात्। वा ग्रहणात् परत्र बाधि-कारनिवृत्त्यर्थम् ॥७८०॥

৭৮২। শা চ্ছা সা হ্বা ব্যে বে পাং ঔ যন্।

শা—পাং ৬।।।, ঔ ৭।, যন্ ।১। ।

এষাং ঔ পরে যন্ স্যাৎ। শায়যতি পায়যতি।

৭৮৩। হেঃ পিবঃ পীপ্যো ঙঃড়ি।

হে ৬।, পিব ৬।, পীপ্য ১।, ঙঃড়ি ৭। ।

অপীপ্যত্।

৭৮৪। ক্রী ব্লী রী ক্নূ য্যৃ ক্ষ্মায্যাতাং পণ্ গুণশ্চ ঔ।

ক্রী—আতাং ৬।।।, পণ্ ।১।, গু. ১।, ঔ ৭। ।

ক্রেপয়তি ব্লেপয়তি রেপয়তি ক্নোপয়তি অর্পয়তি ক্ষ্মাপয়তি স্থাপয়তি।

---

অসুষুপদিতি তু আদৌ জি পশ্চাৎ দ্বিত্বে ঘীশ্চ খেৰ্হ্রসাদেরিতি দীর্ঘ. ক্বিলাদিতি ষ. ॥৭৮১॥

শোয় নিশানে চ্ছোয় লূনৌ ষোয় নাশে হ্বেঞ স্পৰ্দ্ধে ব্যেঞ হ্বতৌ ঐঞবে স্যূতৌ পা পানে পৈ শোষে ইতি দ্বয়ম্। এষাং সপ্তানাং ঔ যন্ স্যাৎ নিত্বাদন্তে। শায়যতি চ্ছায়যতি সায়যতি হ্বায়যতি ব্যায়যতি বায়যতি পায়যতি ॥৭৮২॥

দ্বিভূ তস্য পা পানে ইত্যস্য পীপ্য স্যাৎ ঙঃড়ি। পিবঃ কিম্? পৈ অপীপয়ত্। পাল রক্ষণে অপীপলত্ ॥৭৮৩॥

ক্রীঞি লজ্জে ব্লীগি গত্যাং ওরীঙষ চরণে রীগি বধে গতৌ ইত্যুভয়ম্। ক্নূয়ীঙ দুর্গন্ধে ঋণ হিংসে ঋর্লি গত্যাম্ ঋ প্রাপে চ ইতি ত্রয়ম্। ক্ষ্মায়ীঙ বিধূননে ইতি ষণ্ণামাদন্তানাঞ্চ ঔ পণ্ স্যাৎ যথাসম্ভবং গুণশ্চ। ক্রেপয়তীত্যাদৌ ণিত্বাদন্ত্যাচ. পরে পণি কৃতে পশ্চাপি ধাত্ববয়বত্বাৎ লঘূঙীঽভাবাৎ অপ্রাপ্তৌ গুণবিধানম্। ক্নোপয়তীত্যত্র পকারাৎ পরতয়া হলাল্লোপ ইতি যলোপ.। এবং ক্ষ্মাপয়তীত্যত্রাপি। স্থাপয়তি। আদিষ্টাদন্তানাঞ্চ গ্রহণাৎ দৈঙ পালনে দাপয়তি ডুক্রীঞ ক্রাপয়তীত্যাদি ॥৭৮৪॥

## ৭৮৫। स्थोङो ञ्याङीः।

स्थोङ. ৬।, ञ्याङि ৭।, इ ১।।

**तिष्ठतेः उङ इः स्यात् ञ्याङि। अतिष्ठिपत्।**

## ৭৮৬। घ्रो वा।

घ्र ৬।, वा।১।।

**अजिघ्रिपत् अजिघ्रपत्।**

## ৭৮৭। पाति-स्फायोर्लन्वङौ ञौ।

पाति-स्फायी ৬॥, लन् वङौ ১॥, ञौ ৭।

**पालयति स्फावयति।**

## ৭৮৮। प्री-धूञोर्नन् वा।

प्री धूञो ৬॥, नन्।১।, वा।১।।

**प्रीणयति प्राययति, धूनयति धावयति।**

---

स्था इत्यस्य उङ् स्थोङ् तस्य पणि कृते स्थाप इत्यस्य उङ इत्यर्थः। अतिष्ठिपदिति पणि कृते आकारस्य इकारे क्विलादिति ष ॥ ৭৮৫ ॥

घ्राधातोः पणि कृते घ्रापभागस्य उङ इः स्याद्वा ञ्याङि। इकारे अजिघ्रिपदिति। इकाराभावपक्षे ञ्युङ स्व इति ह्रस्वे सन्वद्भावे खेरित्वे खेर्गुरुत्वात् दीर्घाभावे अजिघ्रिपदिति ॥ ৭৮৬ ॥

पाल रक्षणे इत्यस्य लन् स्फायी ङ वृद्धावित्यस्य वङ् स्यात् ञौ ॥ ৭৮৭ ॥

प्रीश्च धूश्च प्रीधुवौ। प्रीधुवौ च तौ ञौ आनुबन्धौ चेति तयोः। प्रीञ् तर्पणे प्रीगञ कान्तौ च इति द्वयोः प्रीणयति प्राययति ञानुबन्धग्रहणात् प्रीक तर्पणे इत्यस्य तु य प्राययन्ति कविसूक्तिरसायनानीति हलायुध। प्रीङय प्रीतौ चेत्यस्यापि प्राययति। धूञिक कम्पे इत्यस्य तु वायुर्विधूनयति केशरपुष्परेणूनिति हलायुध। अत्र स्वार्थविहितञेर्ञकारेण सम्बन्धात् नन। अन्यथा कम्प प्रेरणे धूनयतीत्यादि प्रयोगा न स्यु। धूनीत्यादीना साध्या इति चेत् तर्हि स्वभावात् कम्पप्रेरणार्थाना तेषा ञौ कृते कम्पप्रेरणस्य प्रेरणमेवार्थ स्यात्। किन्तु कम्पनाया धूनयतीत्यादीनामवश्यम्भावे अत्र वे सूत्रकारः प्राचीनमतानुरोधार्थं. ॥ ৭৮৮ ॥

## ६४३ । अन्यैश्चाश्रद्धामर्षे ।

अन्यै ३।।।, च ।१।, अश्रद्धामर्षे ७। ।

किङ्किञ्च [ ६३७ ]

**न श्रद्दधे मर्षये नो यत् स गर्हिष्यते हरिम् ।**
**हर गर्हेत को निन्देत् विष्णु निन्दिष्यतीश्वरम् ॥**

## ६४४ । किंकिलास्त्यर्थाभ्यां तौ ।

किंकिल अस्त्यर्थाभ्या ३॥, तौ ।१। ।

**त्व किंकिल हृषीकेश निन्दिष्यसि, न मस्यसे ।**
**महादेव चास्ति नाम श्रद्दधे नो न मर्षये ॥**

## ६४५ । जातु-यद् यदा-यदिभिः खौ ।

जातु यद् यदा यदिभि ३।।।, खौ ।१। ।

**एभिर्योगे अश्रद्धामर्षे सदा काले खौ स्यात् ।**
**न मर्षये श्रद्दधे नो जातु निन्देत् जनार्दनम् ॥**

---

श्रद्धा सम्भावना मर्ष क्षमा। श्रद्धाया अभाव अश्रद्धम्। मर्षस्याभाव अमर्ष अश्रद्धञ्च अमर्षञ्च अश्रद्धामर्ष तस्मिन्। किङ्किञ्चेति वृत्ति। डतरडतमक्यन्तस्य किमोरूपैरन्यशब्दैश्च योगे सर्वेषु कालेषु खौत्यौ स्तोऽश्रद्धामर्षेऽर्थे। स जनो यत् हरि गर्हिष्यते हर गर्हेत तदह न श्रद्दधे। को जनो विष्णु निन्देदीश्वर निन्दिष्यति तदह न मर्षये इत्यन्वय ॥ ६४३ ॥

किम पर किल किंकिल। अस्त्यर्थोऽस्ति भवत्यादि। आभ्या योगे सर्वेषु कालेषु तौ स्यादश्रद्धामर्षे। त्वमित्यादि त्व किंकिल निश्चित हृषीकेश निन्दिष्यसि तदह न श्रद्दधे न मर्षये नाम सम्भावनायां महादेवञ्च न मस्यसे अस्ति एवमप्यस्ति तदहमिद सम्भावयामि त्वा न श्रद्दधे न मर्षये च इत्यर्थ। केचित्। किम् किल इति द्वौ शब्दावन्यरहितौ व्यवहितौ च तेन किम् क्रमिष्यति किलैष वामन इति माघ इत्याहु ॥ ६४४ ॥

जातुश्च यद् च यदा च यदिश्च ते तैर्योगे सर्वेषु कालेषु खौ स्यादश्रद्धामर्षे। न मर्षये इत्यादि भवान् जातु कदाचिदपि जनार्दनं निन्देत् तन्न श्रद्दधे न मर्षये इत्यर्थः। एवं यत् निन्देत् यदा निन्देत् यदि निन्देदिति ॥ ६४५ ॥

## ৯৪৬। যচ্চ যত্রাভ্যাং ক্ষেপচিত্রে চ।

যচ্চ যত্রাভ্যা ৩॥, ক্ষেপচিত্রে ৭।, চ।১।।

যচ্চ নিন্দেত্ বিভুং গর্হে চিত্রং শ্রদ্ধাং ন মর্ষয়ে।

## ৯৪৭। চিত্রে ত্যযদিনা।

চিত্রে ৭।, তী।১।, অ-যদিনা ৩।।

যদি-বর্জিতেন শব্দমাত্রেণ যোগে চিত্রে গম্যে সদা তী স্যাত্।

চিত্রং দ্রক্ষ্যতি নামান্ধঃ কৃষ্ণং পশ্যেত্ যদীশ্বরম্॥

## ৯৪৮। বাঢ়েঽপ্যুতাভ্যাং খী।

বাঢে ৭।, অপি উতাভ্যা ৩॥, খী।১।।

অপি হন্যাদঘ শম্ভুরুত দুঃখ জয়েদজঃ।

## ৯৪৯। প্রৌঢ্যা সম্ভাবনে।

প্রৌঢ্যা ৩।, সম্ভাবনে ৭।।

প্রৌঢ়িঃ সামর্থ্যম্। সম্ভাবনং ক্রিয়াসু যোগ্যতাধ্যবসায়ঃ প্রৌঢিহেতুক-সম্ভাবনোপাধিকেঽর্থে বর্ত্তমানাত্ ধোঃ সদা খী স্যাত্। অপি হিংস্যাত্ জগন্নাথো মহাপাতকপঞ্চকম্।

---

যচ্চশ্চ যত্রশ্চ তৌ তাভ্যাম্ অশ্রদ্ধামর্ষে চেতি বৃত্তি। যচ্চ যত্র ইত্যেতাভ্যা যোগে ক্ষেপে চিত্রেঽশ্রদ্ধামর্ষে চ সর্ব্বেষু কালেষু খী স্যাত্। ক্ষেপো গর্হা। চিত্রমাশ্চর্য্যম্। জনো বিভু যচ্চ নিন্দেত্ তদহ গর্হে তচ্চিত্র তত্র শ্রদ্ধা ন করোমি তদহ ন মর্ষয়ে ইত্যর্থ। এব যত্র নিন্দেদিতি॥ ৯৪৬॥

অন্ধ' কৃষ্ণ দ্রক্ষ্যতি নাম সম্ভাবনায়াং তচ্চিত্রম্। অযদিনা কিম্? অন্ধঃ কৃষ্ণ যদি পশ্যেত্তচ্চিত্রম্। অত্র খীপ্রয়োগ' দর্শয়তা যদিনা যোগে চিত্রে গম্যে সদা খী স্যাদিতি সূচিতম্॥ ৯৪৭॥

অতিশয়ার্থে বর্ত্তমানাভ্যামপ্যুতাভ্যা যোগে সর্ব্বেষু কালেষু খী স্যাত্। শম্ভুরঘম্ অপি হন্যাত্ পাপহননেঽতিযোগ্য ইত্যর্থঃ। অজ দুঃখম্ উত জয়েত্ দুঃখজয়েঽতিযোগ্য ইত্যর্থ'॥ ৯৪৮॥

অপি হিংস্যাদিতি জগন্নাথ, সামর্থ্যান্মহাপাতকপঞ্চকহিংসায়া যোগ্য ইত্যর্থঃ॥ ৯৪৯॥

## ९५० । श्रद्धार्थैर्वाऽयदि ।

श्रद्धार्थैं ३॥, वा ।१।, अयदि ७। ।

**श्रद्दधेऽज भजेः प्राणैर्भक्ष्यसेऽज बभक्थ तम् ।**

## ९५१ । भव्ये वा फल हेत्वोः ।

भव्ये ७।, वा ।१।, फल हेत्वो ७॥ ।

**श यायाच्चेन्नमेदीश श्रीश नंस्यति यास्यति ।**

## ९५२ । कामोक्तेऽकच्चिति ।

कामोक्तै ७।, अकच्चिति ७। ।

**काम भजेत् भवान् भर्गं कच्चिदर्चिष्यते शिवम् ।**

## ९५३ । गौ चेच्छार्थैः ।

गौ ।१।, च ।१।, इच्छार्थैं ३॥ ।

**इच्छामि, सर्वं सेवेत श्रीपति सेवता भवान् ।**

**कामोक्त इति किम् ? इच्छन् करोति ।**

---

न यद् अयद् । श्रद्धार्थैर्योगे प्रौक्षा सम्भावने सर्वेषु कालेषु खौ स्याद्वा न तु यच्छब्द प्रयोगे। श्रद्दधे इत्यादि। त्व प्राणै सामर्थ्यैरज भजे अद्य श्रद्दधे । पचेऽज भक्ष्यसे त बभक्थ इति यथाकाल विभक्ति । अयदि किम् ? श्रद्दधेऽज भवान् प्राणैर्भजेत् यत् पुरुषोत्तम पूर्वेण नित्यम् ॥ ९५० ॥

वाग्रहण परत्र वाधिकारनिवृत्त्यर्थम् । फलक्रियाया हेतुक्रियायाश्च वर्त्तमाना द्धातोर्भव्ये खौ वा स्यात् । जन ईश नमेच्चेत् श कल्याण यायात् प्राप्नुयात् । ईशनमस्कारो हेतु कल्याणप्राप्तिफलम् । पक्षे श्रीश नस्यति चेत् श यास्यति । भव्ये कि ? हन्ति पलायते ॥ ९५१ ॥

मण्डूकप्लुताधिकारात् सदेत्यनुवर्त्तते । कामोक्तिरिच्छाप्रकाश । तस्मिन्नर्थे सर्वेषु कालेषु खौ स्यान्न तु कच्चिच्छब्दप्रयोगे। काम भजेदित्यादि। भवान् काम यथेष्टं यथा स्यात् तथा भर्ग शिव भजेदिति वक्तुरिच्छया एतद्वाक्यम्। अकच्चि दिति कि ? कच्चिदर्चिष्यते शिवम् इति कच्चिच्छब्देन वक्तुरिच्छा व्यज्यते तथा च कच्चित् कामप्रवेदने इत्यमर. ॥ ९५२ ॥

## ६५४। विधिनिमन्त्रणामन्त्रणाध्येषण-संप्रश्न-प्रार्थना-प्रेष्य-प्राप्तकालादौ।

विधि—प्राप्तकालादौ ७।।

सदा। यागं कुर्य्यात्, इह भुञ्जीत भवान् इह शयीत भवान्, पुत्रमध्यापयेत् भवान्, किं भो वेदमधीयीय उत तर्कमधीयीय, भो भोजनं लभेय, प्रेषितस्त्वं गच्छेः, प्राप्तस्ते कालस्तपः कुर्य्याः। एवं गौ।

## ६५५। समर्थनाशिषोर्गौ।

समर्थन आशिषो ७॥, गौ।१।।

सिन्धुमपि शोषयाणि।

---

इच्छार्थैर्योगे सर्वेषु कालेषु कामोक्तौ खौ गौ च स्यात्। इच्छामीत्यादि अह-मिच्छामि भवान् शर्वं सेवेत श्रीपतिं सेवतां वा। पृथग्योगात् क्वचित् योगेऽपि इच्छामि कश्चित् सेवेत श्रीपतिं सेवतां भवानिति कश्चित् इच्छन् करोतीति इच्छावान् य स करोतीत्यर्थ। अत्र वक्तुरिच्छा नास्तीति न खौगौ॥ ६५३॥

विधिश्च निमन्त्रणञ्च आमन्त्रणञ्च अध्येषणञ्च सम्प्रश्नश्च प्रार्थना च प्रेष्यञ्च प्राप्त-कालादिश्चेति तस्मिन्। सदेति वृत्ति। एष्वर्थेषु सर्वेषु कालेषु खौ गौ च स्यात्। अप्राप्तप्रापको विधि। यथा यागं कुर्य्यादिति। निमन्त्रणमामन्त्रणञ्च नियो-जनविशेष तत्र यस्याकरणे प्रत्यवायस्तन्निमन्त्रण यथा इह भुञ्जीत भवानिति यस्याकरणे प्रत्यवायो न स्यात्तदामन्त्रणं यथा इह शयीत भवानिति निमन्त्रणा-मन्त्रणयोर्भेद.। सत्कारपूर्वकनियोजनमध्येषणम्। यथा पुत्रमध्यापयेद्भवानिति। सम्प्रश्न जिज्ञासा। यथा किं भो वेदमधीयीय ? इति। प्रार्थना याञ्जा यथा भो भोजनं लभेय अहम् इति शेष। कर्म्मणि प्रेषण प्रेष्य यथा प्रेषितस्त्वं गङ्गां गच्छेरिति। तत्क्रियोचितकाललाभ. प्राप्तकाल यथा प्राप्तस्ते कालस्तपः कुर्य्या. इति। आदि-शब्दादनुमतौ च यथा श्राद्धमहं करिष्ये इति प्रश्ने कुरुष्व इति अनुमतौ ख्या न प्रयोग.। एवं गौति यागं करोतु इह इत्यादि॥ ६५४॥

इष्टार्थसाशंसनमाशी.। जीवतु भवानित्यादि॥ ६५५॥

## ৯৫৬। তু-হ্যোস্তাতঙ্ বাশিষি।

তু-হ্যো ৭॥, তাতঙ্ ।১।, বা ।১।, আশিষি ৭।।

পাতু পাতাত্ বা শিবঃ, পাহি পাতাত্ বা শিব।

## ৯৫৭। মুহুর্ভৃশার্থে হি-ত-স্ব-ধ্বম্।

মুহুর্ভৃশার্থে ৭।, হি-ত স্ব-ধ্বম্ ।১॥।

পৌনঃপুন্যে অতিশয়ে চার্থে সদা কালে ম্যা হি ত স্ব ধ্ব স্যুঃ মুহুর্ভৃশং বা লুনাতি লুলাব লুবিষ্যতি বা, লুনীহি লুনীত লুনীষ্ব লুনীধ্বম্।

## ৯৫৮। মাস্মেন ঘী-হ্যৌ।

মাস্মেন ৩।, ঘী হ্যৌ ১॥।

মাস্মশব্দেন যোগে সদা ঘীহ্যৌ স্তঃ। মাস্ম ভবদ্দুঃখং মাস্ম ভূত্ শোকঃ।

---

তুহ্যোস্তাতঙ্ বা স্যাদাশিষি সর্বাবয়বাদেশোঽয়ম্। তেন ঙিত্ত্বেঽপি নান্ত্যস্য স্থানে। কিঞ্চাস্য ঙিত্ত্বং -ভবান্ রাজত্ব কুরুতাদিত্যাদাবগুণার্থম্। বশ কান্তৌ ভবান্ স্বর্গমুষ্টাদিত্যাদৌ জিপ্রাপ্ত্যর্থঞ্চ ॥৯৫৬॥

পৌনঃপুন্যে অতিশয়ে চার্থে সর্বেষু কালেষু লিঙ্গে যুষ্মদি অস্মদি চ প্রযুজ্যমানে তেষামেকত্বে দ্বিত্বে বহুত্বে চ ম্যা হি ত স্ব ধ্বমিতি চত্বারি বচনানি স্যুরিত্যর্থং তত্রায় বিশেষ। কর্ত্তরি বাচ্যে পরস্মৈপদিনো হি ত ইতি দ্বয়ম্ আত্মনেপদিন স্বধ্বমিতি দ্বয়ম্ উভয়পদিনশ্চত্বারীতি। ক্রিয়াসমুচ্চয়ে সত্যেবায় বিধিরিতি বক্তব্যম্। তথাহি পুরীমবস্কন্দ লুনীহি নন্দন মুষাণ রত্নানি হরামরাঙ্গনা। বিগৃহ্য চক্রে নমুচিদ্বিষো বলী য ইত্থমস্বাস্থ্যমহর্দিবং দিব ইতি মাঘ। স্বমট দ্যামটাট্যোর্বীমিত্যটন্যোঽতিপাবনা.। যূয়মাদৌ বিজানীত মনোবৃত্তিং শুভা মম। রসাতুত্তর দীপ্যস্ব ধ্বান্তং নহি নভো মম। ইতীহমানাস্তম্ভাশীর্হন্তি স্মাতু ঘটস্ব মে ইতি ভট্টি.। কেচিত্তু লুনীহীত্যাদিপদানামব্যক্ততয়া তেন ধাতুনা তেন কারকেণানুপ্রয়োগে সত্যেবায় বিধিরিত্যাহু.। কিঞ্চ মাঘভট্ট্যাদাবনুপ্রয়োগং বিনাপি দর্শনাদনেনোপেক্ষিত: ॥৯৫৭॥

## ৯৫৯ । মা টী বা ।

মা ।১।, টী ।১।, বা ।১। ।

মাযোগে সদা টী স্যাৎ বা । মা বিরংসীৎ সুখং, মা বিরমতু, মা বিরংস্যতি ।

## ৯৬০ । ঢ্যাশিষি ।

ঢী ।১।, আশিষি ৭। ।

জীব্যাচ্চির সজ্জনঃ ।

## ৯৬১ । স্মর্থৈস্ত্যযদি ত্বতীতে ।

স্মর্থৈ ৩।।।, তী ।১।, অযদি ৭।, তু ।১।, অতীতে ৭। ।

স্মরণার্থৈর্যোগে অতীতে কালে তী স্যাৎ । যচ্ছব্দশ্চেৎ ন প্রযুজ্যতে । ঘ্যপবাদোऽয়ম্ । স্মরস্যেনং নংস্যসীশ, যৎ স্মরস্যানমঃ শিবম্ ।

---

মাস্মযোগেऽত্রাব্যবহিতৌ ব্যবহিতস্য । তেন ভবতু দুঃখ মাস্ম ভূচ্ছোকো মাস্ম-ইত্যপি ॥৯৫৮॥

অত্রাপি যোগেऽব্যবহিতৌ ব্যবহিতস্য । তেন মা সুখং বিরংসীদিত্যপি অত্র বাশব্দস্য ব্যবস্থাবাচিত্বাৎ মাযোগাভাবেऽপি আমন্ত্রণেऽর্থে ভবিষ্যৎকালেऽপি টী স্যাৎ বা । তেন সৌমিত্রে মামুপায়স্থা কমাভিচ্ছুর্বংশবদামিতি ভট্টি ॥৯৫৯॥

ইষ্টার্থস্যাশংসনমাশী । আশিষি গম্যমানায়া টী স্যাৎ । আশীর্ভব্য এব সম্ভবতি ॥৯৬০॥

স্মৃধাতোরর্থ ইব অর্থো যেষা তে স্মৃর্থা তৈ । ঘ্যপবাদোऽয়ম্ ইতি । এতেন যদঃ প্রয়োগেऽস্যাপ্রাপ্তৌ ঘী এব স্যাৎ ন তু টীত্যাবিত্যর্থ । অযদীত্যস্য ত্বন্তত্বাৎ পরত্র নানুবৃত্তি । স্মরস্যদো দাশরথির্ভবন্ ভবানমুং বনান্তাদ্বনিতাপহারিণম্ । পয়োধিমাবদ্ধচলজ্জলাবিলা বিলঙ্ঘ্য লঙ্কা নিকষা হনিষ্যতীতি মাঘ ॥৯৬১॥

### ८६२। वानेकस्मार्य्ये।

वा।१।, अनेकस्मार्य्ये ७।।

अनेकस्मार्य्ये प्रयोक्तरि सति स्मरणार्थैर्योगे अतीते तौ वा स्यात्। ध्यायसीदं यदीशानं द्रक्ष्यति स्तोष्यते भवान्।

### ८६३। ध्वर्थासम्भवे थौ।

ध्वर्थासम्भवे ७।, थौ।१।।

धोरर्थस्यानिष्पत्तौ सदा थौ स्यात्। ज्ञानञ्चेदभविष्यत् सुखमभविष्यत्।

### ८६४। लि-युष्मदस्मदि त्यादि त्रिशः।

लि-युष्मद् अस्मदि ७।, त्यादि।१॥, त्रिश।१॥।

लौ युष्मदि अस्मदि च त्वस्यार्थे प्रयुज्यमाने त्यादीनि त्रीणि त्रीणि क्रमात् स्युः।

जानाति योऽखिलं यञ्च न जानीतः श्रुतिस्मृती।
शास्त्राणि च न जानन्ति स मया सेव्यते शिवः।

---

स्मार्य्यमिति ञ्यन्तात् कर्म्मणि य। अनेकमेकभिन्नं स्मार्य्यं स्मारणीयं येन सोऽनेकस्मार्य्यं तस्मिन्। ध्यायसीदमित्यादि भवान् यत् ईशानं द्रक्ष्यति स्तोष्यते च इदं इयं ध्यायसि स्मरसीत्यर्थं पक्षे ध्यायसीदं यदद्राक्षीदस्तावीच्च शिवं भवानिति। स्मार्य्यस्य परस्परसाकाङ्क्षत्वे विधिरयम्। तेन स्मरसि यत् त्वं तर्कमपठः काशीमगच्छश्च इत्यादौ न स्यात्॥८६२॥

परत्वात् सर्व्वेषां बाधकोऽयम्। ज्ञानञ्चेत्यादि। ज्ञानस्यासम्भवात् सुखस्याप्यसम्भव इति ध्वर्थासम्भव। भविष्यत्काले एवायं विधिरिति केचित्। वामनादयस्तु भूते भविष्यति चेमं विधाय भूते यद्यन्नार्थी पथिकोऽत्र दृष्टोऽभविष्यत् तदा अभोक्ष्यत। भविष्यत्काले यदि मत्समीपमागमिष्यत् भवान् तदा घृतेनान्नमभोक्ष्यत इत्युदाहरन्ति॥८६३॥

भासि त्वमेको विश्वेश! भाथोऽच्युतशिवौ! युवाम्।
भाथ यूय हरिहरब्रह्माद्या:। पाह्यनेकश:॥
एको भवामि स्म भवेऽहमादौ
दारैरथोभौ स्म भवाव आवाम्।
वय भवामो बहव स्म पुत्रै-
स्त्वन्मायायाद्यापि विभो! प्रसीद॥

इति त्रि-पाद:।

इति त्याद्यन्ताध्याय।

---

त्यस्यार्थे इति कर्त्तरि कर्म्मणि चेत्यर्थ। यथा नवश पमे इत्यादिना कर्त्तरि वाच्ये प्रत्यये कर्त्तव्ये कर्म्म य कश्चिद्भवतु लिङ्गे कर्त्तरि तिवादित्रय, युष्मदि कर्त्तरि सिवादित्रयम् अस्मदि कर्त्तरि मिवादित्रयम्। एवमात्मनेपदेऽपि ढभावे नमित्यनेन कर्म्मणि वाच्ये प्रत्यये कर्त्तव्ये कर्त्ता य कश्चिद्भवतु लिङ्गे कर्म्मणि त आदित्रय, युष्मदि कर्म्मणि से आदित्रयम् अस्मदि कर्मणि ए आदित्रयम् इति। तथापि तेषामेकत्वद्वित्वबहुत्वेषु विभक्तीनामप्येकवचनद्विवचनबहुवचनानीति। जानातीत्यादि। योऽखिल सकल जानाति श्रुतिस्मृती च य न जानीत ज्ञापयितु न शक्नुत अन्तर्भूतण्यर्थोऽयम्। शास्त्राणि च य न जानन्ति ज्ञापयितु न शक्नुवन्ति। इति कर्त्तरि प्रत्यय। स हरिर्मया सेव्यते इति कर्म्मणि प्रत्यय। हे विश्वेश! त्वम् एको भासि हे अच्युतशिवौ! युवा भाथ हे हरिहरब्रह्माद्या! अनेकशो यूय भाथ पाहि मुहुर्म्मु श वा पाथेत्यर्थ। मुहुर्म्मुशार्थे इत्यादिना हि। भवे संसारे आदौ उत्पत्तिकाले एकोऽह भवामि स्म। सोऽहं दारै सह उभौ आवा भवाव स्म। तथा पुत्रै सह बहवो वय भवाम स्म। एतत् सर्व त्वन्मायया। अतएव हे विभो! अद्यापि त्व प्रसीद प्रसन्नो भव यथा पुनर्न भवामीत्यभिप्राय। हे विभो! प्रसीद इत्युदाहरता युष्मदस्मदोरध्याहारेऽपि मध्यमत्रयशेषत्रये स्यातामिति सूचित तेन शिष्य। कि पचसि? ओदन पचामीत्यादिसिद्धम्। इमाविमान् वित्त शैवानित्यत्र द्वयोर्विशेष्ययो शैवानित्येक विशेषणकथनेन द्वयोर्बहुना युगपदुक्तौ परस्य बलवत्त्व सूचितम्। तेनावापि

लिङ्गयुष्मदस्मदां युगपदुक्तौ तिबादित्रयसिबादित्रयमिबादित्रयाणां युगपत्प्राप्तौ यत् पर भवति तदेव स्यात्। तथापि समुदायस्य सङ्ख्यानुसारेण द्विवचन बहुवचन वेति। किञ्चात्र लिङ्गादीना पाठक्रममनादृत्य भविष्यद्विभक्तीना परत्वमेव ग्राह्यम्। यथा कर्त्तरि वाच्ये स च त्वञ्च चन्द्र पश्यथः त्वञ्च स च पश्यथ स चाहञ्च पश्याव अहञ्च स च पश्याव त्वञ्चाहञ्च पश्याव अहञ्च त्वञ्च पश्याव' न च त्वञ्चाहञ्च पश्याम अहञ्च त्वञ्च स च पश्याम.। कर्म्मणि वाच्ये तु चैत्रेण स च त्वञ्च दृश्येथे त्वञ्च स च दृश्येथे स चाहञ्च दृश्यावहे अहञ्च स च दृश्यावहे त्वञ्चाहञ्च दृश्यावहे अहञ्च त्वञ्च दृश्यावहे स च त्वञ्चाहञ्च दृश्यामहे अहञ्च त्वञ्च स च दृश्यामहे। तथाच अहञ्च भाष्यकारश्च कुशाग्रीयधियावुभौ। नैव शब्दाम्बुधेः पार किमन्ये जडबुद्धय इति। अत्र ऐव इति क्रियापदम् द्वत्वगताविति धौविभक्तेर्विकृते अप्रागमदय न गतवन्तावित्यर्थः। एव' विभक्तीना लिङ्गानाञ्च परस्य बलवत्त्वमिति इमाविमानित्यत्र लिखितम्। भवच्छब्दस्य युष्मत्समानार्थस्यापि लिङ्गविहिता विभक्ति। भवान् चन्द्र पश्यति चैत्रेण भवान् दृश्यते। एव युष्मदस्मदोरपि मुख्ययोरेव ग्रहणम्। गौणयोस्तु लिङ्गविहिता विभक्ति अत्व भवति अनहं भवति अतित्व भवति अत्यहं भवति चैत्रेण अत्वं दृश्यते अनह दृश्यते इत्यादि। अत्र परिहासे गम्यमाने मन्यतेस्तद्युक्तधातोरपि मध्यमत्रयस्य शेषत्रयम्। शेषत्रयस्य मध्यमत्रय स्यादिति वक्तव्यम्। यथा। एहि त्व मन्ये रथेनाहं यास्यसि। एवम् अह मन्यसे रथेन त्वं यास्यामीति। अत्रापि द्वित्वे बहुत्वेऽप्येकवचनमिति दुर्गसिंहः। एव प्रकृतेर्विकृतेर्वापि यत्रोक्तत्व द्वयोरपि। वाचकः प्रकृते सङ्ख्यां गृह्णीयाद्विकृतेर्न तु इति प्राञ्च'। यथा एका वृक्ष' पञ्च नौका भवति पञ्चवृक्षा एका नौर्भवन्तीत्यादि। यत्तु द्वौ द्वौ माषादिमासौ स्यादृतुस्तैरित्यमरोक्तौ स्यादिति क्रियापद तत्साध्यस्य एकत्वानुरोधात् एव नैषधेऽपि विभज्य मेरुर्न यदर्थिसात्कृतो न सिन्धुरुत्सर्गजलव्ययैर्मरु। अमानि तत्तेन निजायशोयुग द्विफालबद्धाश्चिकुराः शिर स्थितमिति। अस्यार्थ। तेन नलेन द्विफालबद्धाश्चिकुरा' शिर स्थित निजायशोयुगम् अमानि। अत्र चिकुरा इति प्रकृतिकर्मणो बहुत्वेऽपि निजायशोयुगमिति विकृतिकर्मण एकत्वादमानीति एकवचनान्त' क्रियापदमिति तत् न समीचीनम्॥ ९६४॥

इति तिपाद.।

## प्रथमः पादः—त्यः ।

---

### ९९५ । कृद्धोः क-भावे ।

कृत् ।१।, धो. ५।, क-भावे ७। ।

**वक्ष्यमाणस्त्यः कृत्सञ्ज्ञः स्यात्, स च धोः परः स्यात्, स च के भावे च स्यात् ।**

### ९९६ । सरूपो बाध्यः ।

सरूप १।, बाध्य १। ।

**समानरूपस्त्यः कृता बाध्यते नत्वसरूपः ।**

---

प्रकरणमिदात् पूर्वोक्तानामनुवृत्त्यभावे वक्ष्यमाणमाक्षिपति । वक्ष्यमाणस्त्यादि चणम्पर्य्यन्तस्य प्रत्ययसमूहः कृत्सञ्ज्ञ स्यादित्यर्थः । स च धातुविशेषाद्विहितोऽपि प्रयोगानुसारादन्यस्मादपि स्यादित्यत आह स च धो पर स्यादिति । धोर्धातुमात्रादित्यर्थः । तेन शीव्रजादिभ्यो विहितः क्यप् ईरधातोरपि स्यात् यथा ईर्ष्या । तथाच व्रज्याटाट्या पर्य्यटन चर्य्यालोर्य्यापथस्थितिरित्यमरः । एव सकृत्स्तम्भादिपरात् क्रादेर्विहितोऽपि इ प्रत्यय देवादिपूर्वात् यजतेश्च स्यात् यथा देवान् यजतीति देवयजि । तथाच अदमो द्विजान् देवयजीन्निहन्म इति भट्टि । एवम् अर्थविशेषे विहितोऽपि कृत्प्रयोगानुसारादर्थान्तरेऽपि स्यादित्यत आह स च के भावे चार्थे इति । तेन ढभावयोर्विहितस्त्यो वसते कर्त्तर्य्यपि स्यात् । यथा वसतीति वास्त्यः । अत्र मनीषादित्वात् वृद्धिः । एव भियोऽपादानेऽपि भव्य । भेतव्या रजनी । एवञ्च सम्प्रदानकरणाधिकरणेष्वपि अनीय स्यात् । यथा ददात्यस्मै इति दानीयो विप्रः । स्नायतेऽनेनेति स्नानीयं जलम् । रम्यतेऽस्मिन्निति रमणीयं गृहम् । एव कर्त्तर्य्यपि घ्यण् । यथा नियोक्तुमर्हति नियोग्य प्रभुरिति । एवं जायते इति जन्य । एवञ्च गा हन्ति यस्मै स गोघ्नोऽतिथि । अत्र हनचरगष्टक् इत्यनेन कर्त्तरि विहितष्टक् सम्प्रदानेऽपि स्यादिति । अतएव कृद्धोः कभाव इत्युक्तेरन्यत्रापि प्रयोगत इति स्वय वक्ष्यति । विशेषेण सामान्यस्य बाधनं नियमयति ॥ ९९५ ॥

विशेषेण कृता सामान्य. कृत्सरूप एव बाध्यते इत्यर्थः । सरूपत्वन्तु अनुबन्धं

## ६६७ । तव्यानीय-या ढ-भावे ।

तव्य-अनीय या. १॥ ढ भावे ७। ।

**धोरेते स्युर्ढभावे । चेतव्यं चयनीयं चेयं पुण्यम् । भवितव्यं भवनीयं भव्यं त्वया ।**

---

हित्वा स्थायिभागेन एकावयवत्वम् । यथा विशेषे ध्यणा सामान्यो य एव बाध्यते न तु तव्यानीयौ । एवम् एकार्थे एव सरूपत्वं गृह्यते न तु भिन्नार्थत्वे, तेन पचादित्वात् कर्त्तरि विहितेन विशेषेण अना सामान्य सरूपोऽपि घञ् न बाध्यते । अतएव पचतीति पच पचन पाक इत्यादि स्यादेव । एवं जीषि ग्रथि ग्रन्थि इत्यादिना विहितेन अनेन अनट् न बाध्यते स्त्रीविहितत्वेन अर्थभेदात् । तेन कारणा कारण यातना यातन सूचना सूचन विस्मापना विस्मापन अतिशायना अतिशायन मारणा मारण विदारणा विदारणम् इत्यादय सिद्धा । एवं भेमक्तात्सरीरिति विहितेन अप्रत्ययेनापि घञलौ न बाध्येते । तेन चेष्टडीहे ईहडचेष्टे अहिकभासे इत्यादि वोपदेव । एवञ्च शस्याद इति विहितेन अ-प्रत्ययेनापि घञलौ न बाध्येते । तेन लसत् केसे प्रक्रोशञ्रीसे लुट्‌स्य् जिघांसे इत्यादि वोपदेव । अतएव विशेषेणापि सामान्यो न बाध्यते क्वचित् इति जौमरा । किं चात्र समो बाध इत्यनेनापीष्टसिद्धौ सरूपग्रहण ज्ञापयति । स्त्रीविहितप्रत्ययेन क्वचिदसरूपोऽपि स्त्रीविहितप्रत्ययो बाध्यते, तेन शंस्याद इति अप्रत्ययेन जीषि ग्रथि इति अनप्रत्ययेनापि क्तेर्बाधात् चिकीर्षकारि इत्येतयोः चिकीर्ष्टिं कार्त्तिरिति न स्यात् । क्वचित् न बाध्यते च तेन शसते शस्तिः पच्यते पङ्क्तिः आर्त्तिरपात्तिरित्यादि सिद्धमिति । एवञ्च ईषद्दु सुपूर्वकधातोः परविधानात् विशेषाभ्या खल् अन इति द्वाभ्याम् असरूपाऽपि तव्यादय पञ्च बाध्यन्ते । तेन दुःखेन क्रियतेऽसौ दुष्करो धर्म. । एव दुर्गमो देश' दुर्द्धर्ष. दुर्द्दर्शनः सूर्य्य इत्यादौ तव्यादयो न स्युरेव ॥६६६॥

चेतव्यमित्यादि । चिन चिञ चित्या कर्मणि वाच्ये तव्य नेमेकाजिति इम् निषेधः । पुण्यस्य कर्मणः क्लीबत्वात् तद्विशेषणाना चेतव्यादीनामपि क्लीबत्वम् । एव भावे तव्यादौ भवितव्यमित्यादि । भव्यमित्यत्र ओदौतोऽव्वादित्यने यकारस्य अव्यस्यादोकारस्य अवादेशः । भावप्रत्ययान्तात् क्लीबत्वम् । तथाच, अनाक्ति.

**९६८। नोऽचोऽन्तरदुर्गेः प्राग्वसोऽख्या-भाभूपूञ्क्रमगमप्यायवेपायवेपानिजादीदितो ञि-ह-सादीजुङस्तु वा।**

न ६।, अच ५।, अन्तरदुर्गे ५।, प्राग्वत् ।१।, ण: १।, अख्या अनिजादीदित. ५।, ञि ह सादीयुङ ५।, तु ।१।, वा ।१।।

**अन्तरो दुर्वर्जगेश्च परस्य णविधिहेतौ सति नस्याचः परस्य णः स्यात्, न तु ख्यादेः इजादिवर्जेदितश्च, ञन्ताद्धसादीजुङस्तु वा। अन्तर्याणीयं प्रयाणीयम्। प्रयापणीय प्रयापनीय प्रकोपणीयं प्रकोपनीयम्। ख्यादेस्तु प्रख्यानीयं प्रख्यापनीयं प्रभानीय प्रभापनीय, प्रभवनीय प्रभावनीयं, प्रपवनीय प्रपावनीय, प्रक्रमनीय प्रक्रामनीय, प्रगमनीय प्रप्यायनीय प्रवेपनीय प्रकम्पनीयम्। इजादेस्तु प्रेङ्खणीयम्।**

---

कारके वाच्ये वाच्यलिङ्ग क्तदुच्यते। भावे ल्यर्थखलर्थान्ता अनटाद्या नपुंसके। क्त्याद्यन्ताश्च स्त्रिया ज्ञेयाः पुंस्यथुर्घञलौ तथा अन्येषान्तु कृतां लिङ्ग वेदितव्यं प्रयोगत ॥९६७॥

नास्ति दुर्यत्र सोऽदु। अदुश्चासौ गिश्चेति अदुर्गि। अन्तर् च अदुर्गिश्च अन्तरदुर्गि तस्मात्। इच् आदिर्यस्य स इजादि. नास्ति इजादिर्यत्र सोऽनिजादिः अनिजादिश्चासौ इदिच्चेति अनिजादीदित्। ख्याश्च भाश्च भूश्च पूञ्च क्रमश्च गमश्च प्यायश्च वेपश्च अनिजादीदिच्चेति न ख्या भा भू पूञ् क्रम गम प्याय वेपानिजादीदित् अख्या भा भू पूञ् क्रम गम प्याय वेपानिजादीदित् तस्मात्। हसादिश्चासौ इजुङ् चेति हसादीजुङ्। ञिश्च हसादीजुङ् चेति तस्मात्। अन्तरदुर्गेः पराद्धातो. परस्य कृत्सम्बन्धिनकारस्य अच. परत्वे सति णः स्यादित्यर्थः अन्तर्याणीयमित्यादि। एवं प्रयायिणौ अन्तर्याण प्रयाण प्रहीण. प्रहीणवान् प्रहाणिरित्यादि। विकल्पमाह प्रयापणीय प्रयापनीयमित्यादि। एव प्रयापणं प्रयापनम् इत्यादि। प्रकोपणीय प्रकोपनीयम्। एव प्रमेहणीयं प्रमेहनीयम् इत्यादि। ख्यादेस्तु ख्यादीनां केवलानां ञन्तानाञ्च वर्जनात्

## ९६९। खनाट्टेरे ये।

खनात् टे ६।, ए।१।, ये ७।।

**खन आदन्तस्य च टे रे स्यात् ये परे। खेयं देयम्।**

## ९७०। घ्यणोरावश्यके।

घ्यण् ।१।, ओ. ५।, आवश्यके ७।।

**उवर्णान्तादवश्यम्भावेऽर्थे घ्यण् स्यात् ढभावे।**

**विप्रेण शुचिना भाव्यम्।**

## ९७१। हस्टवासोः।

हस् ऋ-यु आ सो ५।।

**हसन्तात् ऋवर्णान्तात् यौतेरासुनोतेश्च घ्यण् स्यात् ढभावे। बाह्य घात्य जन्य वध्यं कार्य्यं याव्यम् आसाव्यम्।**

---

प्रख्यानीय प्रख्यापनीय प्रभानीय प्रभापनीय प्रभवनीय प्रभावनीय प्रपवनीय प्रपावनीय प्रक्रमनीय प्रक्रामनीय प्रगमनीय प्रप्यायनीय प्रवेपनीय प्रकम्प नीयम्। गमादीना केवलाना ञ्यन्तानाञ्च अत्र तुल्यं रूपम्। इजादेस्तु प्रेङ्खणीयम् अत्र नित्य णत्वम्। अच किम्? प्रभुग्न प्रविग्न। प्राग्वत् किम्? प्रतियानीयम्॥ ९६८॥

खन् च आच्च खनातौ। खनातीष्टि खनाट्टि तस्य। प्रकरणबलात् ये इति ल्यसञ्ज्ञके यकारे परे इत्यर्थ। खेयमिति खनतेर्हस्‌ट्युासोरिति घ्यणि अनेन टेरेकार। देयमिति दाखरूपात् तव्यानीययाः इति ये टेरेकार। ल्यसञ्ज्ञके इति किम्? खन्यते दीयते प्रखन्य प्रदाय इत्यादौ न स्यात्। एवं ये परे गणयतेरपि टेरेकारो वा वक्तव्य। तेन गणेय. गण्य॥ ९६९॥

सूत्रत्वात् नकारस्य द्वित्वाभाव। अवश्यम् इत्यस्य भावे ष्णे कृते व्यर्टलोप इति टेर्लोपे आवश्य तत आवश्यमेव आवश्यक स्वार्थे क.। मण्डूकप्लुताधिकारात ढभावे इत्यनुवर्त्तते। उवर्णान्ताद्धातोर्ढे भावे च घ्यण् स्यात् क्रियाया अवश्यम्भावे अर्थे। घणावितौ। भाव्यमिति भूधातोर्घ्यणि णित्त्वात् वृद्धौ यस्य अञ्वत्त्वादौकारस्य आवादेश। एव तपस्विना विष्णु. स्ताव्य.। अनावश्यके तु ये भव्यं क्वापिस्तुत्य.॥ ९७०॥

## ९७२। चजोः कगौ घित्यसेम्क्त-यज्ञाङ्ग-यज-गत्यर्थवन्चाम्।

चजो ६॥, कगौ १॥, घिति ७।, असेम्क्त यज्ञाङ्गयज गत्यर्थ वन् चा ६॥।

**घिति परे चजोः कगौ स्तो न तु सेम्क्तादेः।**

**पाक्य रोग्यम्। गतौ तु वञ्च्यम्। अन्यत्र वङ्क्यं काष्ठम्।**

## ९७३। नावश्यके त्यज-यज-प्रवचाश्च घ्यणि।

न।१।, आवश्यके ७।, त्यज यज प्रवचा ६॥।, ।१।, घ्यणि ७।।

**आवश्यकेऽर्थे एषां चजोः कगौ न स्तो घ्यणि।**

**अवश्यं पाच्यं, त्याज्यः याज्यः प्रवाच्यः।**

---

हस् च ऋश्च युश्च आसुश्चेति तस्मात्। पृथग्योगादावश्यक इत्यस्य नानुवृत्तिः। बाह्यमिति वहधातोर्घ्यणि वृद्धिः। घात्यमिति हनधातोर्घ्यणि। खेर्ध्वौ घ इति हस्य घत्वे वृद्धौ हनस्तङ इति तङ्। जन्यमिति कभाव इत्युक्ते कर्त्तरि घ्यण्। बध्यमिति बध हतौ कर्मणि घ्यण्। उभयत्र वृद्धौ जनबध इति ह्रस्वः। कार्य्यमिति डुकृञ् कृञ्विक्षेपे इति ह्रस्वदीर्घान्ताभ्यां घ्यणि वृद्धिः। याव्यमिति युल मिश्रणे घ्यणि वृद्धौ यस्य अज्वद्भावादावादेशः। एवम् आसाव्यमिति आङ्पूर्वसुनोतेर्घ्यण् ॥९७१

सेम् क्तौ यस्मात् स सेम् क्तः। यज्ञस्याङ्गं यज्ञाङ्गं यज्ञाङ्गे यज यज्ञाङ्गयज। गत्यर्थश्चासौ वन्च चेति गत्यर्थ वन्च। सेम् क्तश्च यज्ञाङ्गयजश्च गत्यर्थ वन्च चेति। ततो नञ् समासः। तेषाम्। पाक्यमिति डुचौ श्र पच घ्यणि वृद्धौ चस्य कः। एवं षिच पर्शो ञ सेक्यम्। रोग्यमिति रुजशो भङ्गे घ्यणि गुणे जस्य गः। एवं षन्जौ ञ सङ्गे सङ्ग्यमिति। एवं घञि पाकः सेकः रोगः सङ्गः। सेम् क्तादेश्चस्तु टुडु याचृञ याच्यः। लोचृ ङ्दर्शे लोच्यः। यज्ञाङ्ग यजस्तु घञि प्रयाजः अनुयाजः उपांशुयाजः ऋतुयाजः। प्रधानयज्ञस्याङ्गयज्ञा एते। यज्ञाङ्ग इति किम्? यागः प्रधानयज्ञ इत्यर्थः। वन्चु गत्याम्। वञ्च्यो ग्रामः। अनेकार्थत्वात् वक्रीभावे कर्त्तरि घ्यणि वङ्क्यं काष्ठम्। केचित्तु श्वानं पचतीति श्वपाक एवं मासपाकः कपोतपाकः उलूकपाकः एषु ढात् षत्विति षणि परेऽपि चकारस्य ककारमिच्छन्ति। श्वमते तु पच्यतेऽसाविति कर्मणि घङि पाकः। ततः श्वा पाको यस्य स श्वपाकः इत्यादि। एषु शङ्खभिन्नादिवत् विशेषणस्य परनिपातः इति ॥९७२॥

## ९७४। भुज-वच-निप्रयुजोऽन्नाशब्दशक्ये।

भुज-वच- निप्रयुज ६।, अन्न अशब्दशक्ये ७।।

भुजो भक्ष्येऽर्थे, वचोऽशब्देऽर्थे, निप्रपूर्वस्य युजः शक्येऽर्थे, चजोः कगौ न स्तो घ्यणि। भोज्यं, वाच्यं, नियोज्य· प्रयोज्य·। एषु किम्? भोग्या भूः, वाक्यं पदसमुदायः, नियोक्तुमर्हति नियोग्यः प्रभुः।

## ९७५। पाय्य धाय्य प्रणाय्यानाय्य कुण्ड-पाय्य सञ्चाय्य राजसूय सान्नाय्य निकाय्य परि-चाय्योपचाय्य चित्याग्निचित्या समूह्यामावस्या-मावास्या याज्याः।

पाय्य—याज्या १।।।

एते घ्यणन्ता निपात्यन्ते।

पाय्य मानम्। दधात्यग्निमिति धाय्या सामधेनी, धाय्या ऋत्विजः। प्रणाय्य· असम्मतः प्रियो वा। अनाय्यो दक्षि-

---

क्रियाया अवश्यम्भावेऽर्थे सर्वेषां धातूनां चजोः कगौ न स्तो घ्यणि परे त्यजयज प्रवचान्तु आवश्यकेऽनावश्यके चार्थे चजोः कगौ न स्तो घ्यणि परे इत्यर्थः। अवश्य पाच्यम् एवम् अवश्य रोज्यम्। त्यजादेस्तु त्याज्य याज्य प्रवाच्य इति। समाहारेणैवेष्टसिद्धौ प्रवचामिति बहुवचनात् केषाञ्चिदनिम् क्तानामपि न स्यात्। तेन मुचलृशपञ्जौ मोचे मोच्य शुच शोके शोच्य इत्यादि। शुचेर्वेमसहेत्यादिना वेमत्वान् नेमडीश्वीति इमो निषेधादनिम् त्तत्वम् ॥९७३॥

भुजस्य वचस्य निप्राभ्यां युज च तस्य। अन्नञ्च अशब्दश्च शक्यञ्चेति तस्मिन्। भुज्यते यत् तत् तद्भोज्य अन्नादि। वाच्य वचनीयमित्यर्थः। नियोक्तु शक्यतेऽसौ नियोज्य प्रयोज्य. सेवक। एषु किम्? भोग्या भू उपभोग्या पालनीया वा इत्यर्थः। वाक्यं परस्पराकाङ्क्षायुक्तपदसमूहः। नियोक्तुमर्हति योग्यो भवति नियोग्य प्रभु अत्र कभाव इत्युक्तं कर्त्तरि घ्यण् ॥९७४॥

पा पाने घ्यणि पाय्य परिमाण पेयमन्यत्। दधात्यग्निमिति धाय्या सामधेनी

णाग्नि । कुण्डैः पीयते अत्र सोम इति कुण्डपाय्यः क्रतुः । सञ्चाय्यः क्रतुः । राज्ञा सूयते राजसूयः क्रतुः । सान्नाय्यं हविः । निकाय्यो निवासः । परिचाय्योऽग्निः, उपचाय्योऽग्निः चित्योऽग्निः । अग्नेश्चयनमिति अग्निचित्या । समूह्योऽग्निः संवाह्य इत्यर्थः । अमा सह वसतोऽस्या चन्द्रार्काविति अमावस्या अमावास्या । यजन्ति अनया इति याज्या । निपातो ह्यर्थविशेषे ।

## ९७६ । पु शक सह तक चत यत शसोऽचम वप रप लप त्रप ढभो यो भज जप यजानमस्तु वा ।

पु—शस ५।, अचम—ढभ ५।, य' १।, भज—आनम' ५।, तु ।१।, वा ।१।

पवर्गान्तात् शकादेश्च चमादिवर्जात् यः स्यात् ढभावे भजादेस्तु वा ।

---

अग्निज्वालनमन्त्र । एव धाय्या ऋत्विज ,धेयमन्यत् । प्रणीयतेऽसौ प्रणाय्य असम्मत प्रियो वा । अन्यत्र प्रणेय । गार्हपत्यादग्नेरानीयो य प्रणीयते स आनाय्यो दक्षिणाग्नि । अन्यत्र आनेय । कुण्डै पीयतेऽत्र सोम इति कुण्डपाय्य क्रतु । सोमो लताविशेषस्य रस' । अन्यत्र कुण्डपेय दुग्धम् । सञ्चीयतेऽसौ सञ्चाय्य क्रतु । अन्यत्र सञ्चेय पुण्यम् । सुनञ्च सर्वे क्लेदपीडामन्थे । राज्ञा सूयते मङ्गलपूर्वकं स्नायतेऽस्मिन्निति राजसूयः क्रतु' सन्नीयते इदं सान्नाय्य हवि । अन्यत्र ,सन्नेयम् । चिन चिञ चित्या निचीयतेऽसौ निकाय्यो निवास. अत्र चस्य क । अन्यत्र निचेयम् । परिचीयतेऽसौ परिचाय्योऽग्नि उपचीयतेऽसौ उपचाय्योऽग्नि उपचेयमन्यत् चीयतेऽसौ चित्योऽग्नि. चेयमन्यत् । अग्नेश्चयनमग्निचित्या । सम्पूर्ववहेञो समूह्यतेऽसौ समूह्योऽग्नि. अत्र घ्यणि निपातनात् जि तस्य दीर्घश्च । अन्यत्र सवाह्य. । अमा चन्द्रस्य आद्या कला । तया सह वसतोऽस्या तिथौ चन्द्रार्कौ इत्यर्थे अमावस्या अमावास्या इति द्वयम् । यजन्त्यनयेति याज्या ऋक् । एतेऽर्थविशेषा. कुतो लभ्यन्ते इत्याशङ्क्याह निपातो ह्यर्थविशेष इति ॥९७५॥

रम्यं शक्यं सह्यं तक्यं चत्यं यत्यं शस्यम्। भज्यं भाग्यं, जप्य जाप्य, यज्यं याज्यं, आनम्यम् आनाम्यम्। अमादेस्तु आचाम्य वाप्यं राप्यं लाप्यं त्राप्य दाभ्यम् अनकारनिर्देशात्।

## ९७७। य्यालभो मुण्।

यि ७।, आलभ ६।, मुण् ।१।।

आङ् पूर्वस्य लभो मुण् स्यात् यकारे परे। आलम्भ्या गौः।

## ९७८। उपात् स्तुतौ।

उपात ५।, स्तुतौ ७।।

उपपूर्वस्य लभो मुण् स्यात् ये परे प्रशंसायाम्। उपलम्भ्यः साधुः। स्तुतौ किम्? उपलभ्यमस्मात् किञ्चित्।

## ९७९। गद मद यम चराचरोऽगेर्यः।

गद मद यम चर-आचर ५।, अगेः ५।, य' १'।

अगिभ्य एभ्यो य' स्यात् ढभावे। गद्यं मद्य यम्य चर्य्यम् आचर्य्यम्। अगे' किम्?, प्रगाद्यम् अभिचार्य्यम्।

---

पुश्च शकश्च सहश्च तकश्च चतश्च यतश्च शस चेति तस्मात्। चमश्च वपश्च रपश्च लपश्च त्रपश्च दभश्च ते, न विद्यन्ते ते यत्र ऽजम वप रप लप त्रप दभ-तस्मात्। भजश्च जपश्च यजश्च आनम चेति त[illegible] हसन्तात् प्राप्तस्य घ्यणो बाधकोऽयम्। रमुङजौ रम्यम् एव तर्पौ तप्य शपौञ शप्य' कहड स्तुतौ वर्ण्य कव्य। लभ्यग-हिंसे लभ्य। शक्यमित्यादि सुगमम्। दाभ्यमिति दन्भु दम्भे इत्यस्य दभ इति नकाररहितपाठात् नकारस्य लोपे वृद्धिरित्यर्थ ॥९७६॥

आङ् पूर्वस्य लभो मुण् स्यात् ये परे। खिल्लादन्याच पर। आङ् पूर्व लभ-धातुर्मारणे वर्त्तते। आलम्भ्या गौर्मारणीया इत्यर्थ ॥९७७॥

उपलम्भ्य साधु स्तव्य इत्यर्थ ॥९७८॥

अगे कि प्रगाद्य प्रमाद्य प्रयाम्यम् एषु हसन्तात् घ्यणेव चर केवलस्य आङ्-पूर्वस्य च ग्रहणात् चर्य्यम् आचर्य्यम्। अन्यत्र अभिचार्य्यमिति। ये पं ऽद्भुतेऽर्थे आचरे, सुम् वाच्य.। आश्चर्य्यम् ॥९७९॥

९८० । पण्यावद्य वर्य्याचार्य्य वह्य जय्य चय्य क्रय्यार्य्योपसर्य्याजर्य्यम् ।

पण्य—अजर्य्यम् १। ।

एते यान्ता निपात्यन्ते । पण्यं विक्रेयम् । अवद्यम् अनिष्टम् । वर्य्या कन्या, वर्य्यं श्रेष्ठम्, आचार्य्यो गुरुः । उह्यतेऽनेनेति वह्यं शकटम् । जेतुं शक्यं जय्यम्, एवं चय्यम् । क्रय्यं हट्टे प्रसारितम् । अर्य्यः स्वामी वैश्यो वा । उपस्रियते इत्युपसर्य्या ऋतुमती । न जीर्य्यति इति अजर्य्यं सङ्गतम् ।

९८१ । ह भृ जुषस्तिन्-शासदुङ् वृञो-ऽक्लृप चृत ऋच पाणिसृज् समवसृजः क्यप् ।

ह—वृञ ५।, अक्लृप—समवसृज ५।, क्यप् ।१। ।

ह्वादेरृकारोङो वृञश्च क्लृपादिवर्जात् क्यप् स्यात् ढभावे ।

---

पण ङ् व्यवहृतौ स्तुतौ पण्यं विक्रेयद्रव्यम् । अन्यत्र विष्णु पणी स्तव्य इत्यर्थ । नञ् पूर्वस्य वदते अवद्य निन्दनीयम् । अन्यत्र अवाद्य वाक्यम् । वञ् ग सम्भक्तौ वर्य्या कन्या वर्य्यं श्रेष्ठम् अन्यत्र वार्य्यः । आचार्य्यो गुरु अन्यत्र आचर्य्यम् । उह्यतेऽनेनेति वह्य शकटम् । अन्यत्र वाह्यम् । जय्य जेतु शक्यम् । अन्यत्र जेयम् । चय्य चेतु शक्यम् । अन्यत्र चेयम् । क्रय्य हट्टे प्रसारितम् । अन्यत्र क्रेयम् । ऋ गतौ अर्य्य स्वामी वैश्यो वा । अन्यत्र आर्य्य । उपस्रियते इति उपसर्य्या ऋतुमती । अन्यत्र उपसार्य्यम् । न जीर्य्यति इति अजर्य्यं सङ्गतम् अन्यत्र अजार्य्यम् ॥९८०॥

ऋत् उङ् यस्य स ऋदुङ् । हश्च भृश्च जुषश्च स्तुश्च इन च शास च ऋदुङ् च वृञ् चेति तस्मात् । पाणौ सृज् पाणिसृज् । समीऽव' समव' समवात् सृज् समवसृज् । क्लृपश्च चृतश्च ऋचश्च पाणिसृज् च समवसृज् च न विद्यन्ते ते यत्र सोऽक्लृप चृत ऋच पाणिसृज् तस्मात् ॥९८१॥

## ९८२। स्वस्य तन् पिति।

स्वस्य ६।, तन् ।१।, पिति ७।।

स्वान्तस्य तन् स्यात् पिति। आहृत्यः भृत्यः जुष्यः स्तुत्यः इत्य. शिष्यः वृध्यः वृत्यः। क्लृपादेस्तु कल्प्यं चर्त्यम् अर्च्यं पाणिसर्ग्या समवसर्ग्या रज्जुः।

## ९८३। क्लृ वृष मृज गुह दुह शन्स सं भृ प्रत्यपिग्रहो वा।

क्लृ—ग्रह ५।, वा ।१।।

एभ्यः क्यप् स्यात् वा ढभावे। क्लृत्य काल्प्यं, वृष्य वर्ष्यं, मृज्य मार्ग्यं, गुह्यं गोह्यं, दुह्य दोह्यं, शस्यं शंस्यं, सम्भृत्यः सभार्य्य, प्रतिगृह्य प्रतिग्राह्यम्, अपिगृह्यम् अपिग्राह्यम्।

---

ऋस्वान्तस्य तन् स्यात् पिति क्लति परे। अत्र येन केनापि प्रकारेण स्वान्तस्य ग्रहणम्। न तु स्वभावस्वान्तस्यैव। तेन प्रवत्य प्रतत्य इत्यादौ वनतनेति ञम् लोपऽनेन तन्। आहृत्य इति। आङ् पूर्वं हङ शादरे क्यपि किस्वाङ्गुणाभावे पित्त्वात् तन्। शिष्य इति शास्ते. क्यपि शासुङ्गिति आकारस्य इकारे शास वस-घसेति षत्वम्। वृध्य इति वृधु इत्यस्यान्तभूतञ्यर्थत्वात् सकर्म्मकत्वे कर्म्मणि क्यप्। वृत्य इति आनुबन्धस्य वृञ वरण इत्यस्य ग्रहणात् वृङग सम्भक्तौ इत्यस्य वार्य्य इत्येव। कल्प्यमिति क्लृपुङ्ल कल्पने क्लृप क्लृप इति क्लृपादेशे ष्यणि गुण। चृतश्च चर्त्यम्। ऋचश्च अर्च्यम्। पाणिभ्या सृज्यतेऽसौ पाणिसर्ग्या रज्जु। अत्र चजो कगाविति जस्य ग। एव समवसर्ग्या ॥९८२॥

समो भृ सम्भृ प्रत्यपिभ्या ग्रह प्रत्यपिग्रह। क्लृश्च वृष च मृज च गुह च दुह च शन्स सम्भृश्च प्रत्यपिग्रह चेति तस्मात्। गुह्यं गो ह्यमिति ष्यणि गुणे अत्र परत्वाभावात् गुहीणोरूरित्यनेन ऊर्न स्यादिति व्याख्यातम्। अन्यत् सुगमम् ॥९८३॥

९८४ । गृह्य विनीय विपूय जित्या सूर्य्य रुच्याव्यथ्य भिद्योद्ध्यपुष्य सिद्ध्य तिष्याज्य युग्य कृष्टपच्य कुप्य भार्य्याः ।

गृह्य—भार्य्या १॥ ।

एते क्यबन्ता निपात्यन्ते ।

प्रगृह्य पदं, कृष्णगृह्यः कृष्णवर्ग्यं, गृह्योऽस्वैरी, ग्रामगृह्या ग्रामबाह्या । विनीयः कल्कः । विपूयो मुञ्ज । जित्या हलि । सरतीति सूर्य्यः । एवं रुच्य, अव्यथ्यः । कूलं भिनत्तीति भिद्यो नदः । वारि उज्झतीति उद्ध्यो नद । कार्य्यं पुष्णातीति पुष्यो नक्षत्रम् । कार्य्य साधयतीति सिद्ध्य, स एव तिष्योऽपि । आज्य घृतम् । युग्य वाहनम । कृष्टे स्वय पच्यते इति कृष्टपच्यो व्रीहि. । कुप्य सुवर्णरूप्याभ्यामन्यत् । भार्य्या वधू क्षत्रिया च ।

---

पदपक्षपरतन्त्रबहिर्भूतेषु गृह्यपद निपात्यते । यथा प्रगृह्य पद यत् स्वरेण समुन्नीयते । कृष्णगृह्य कृष्णपक्ष. पाण्डव इत्यर्थ । गृह्योऽस्वैरी अधीन इत्यर्थ । ग्रामगृह्या ग्रामबाह्या नदीत्यर्थ एभ्योऽन्यत्र ग्राह्यम् । विनीय कल्क । कल्कोऽस्त्री समलैलसोरित्यमर । अन्यत्र विनेय । विपूयो मुञ्ज शरपुङ्ख इत्यर्थ । अन्यत्र विपव्य, जित्या हलिर्महत् हलमित्यर्थ । अन्यत्र जेय । सरति गच्छतीति सूर्य्योऽर्क । सूर्य्यादय तिष्यान्ता अष्टौ कर्त्तरि क्यबन्ता । अन्यत्र सार्य्य । रोचते रुच्य । न व्यथते अव्यथ्य । कूल भिनत्तीति भिद्यो नद । वारि उज्झतीति उद्ध्यो नद । कार्य्य पुष्णातीति पुष्यो नक्षत्रम् । कार्य्यं साधयतीति सिद्ध्य । तोषतीति तिष्य । सिध्यतिष्यौ पुष्यनक्षत्रे । अनञ्जुवन्ति अज्यते मन्यते अनेनेति आज्य घृतम् । युज्यते इति युग्य वाहनम् । कृष्टे क्षेत्रे स्वय पच्यते इति कर्म्मकर्त्तरि कृष्णपच्यो व्रीहि । गुपू रक्षे गुप्यते इदम् कुप्य स्वर्णरूप्याभ्यामन्यत्र गस्य क. अन्यत्र गोप्य वच. । भ्रियतेऽसौ भार्य्या वधू क्षत्रिया च ॥९८४॥

## ९८५ । लेर्वदः क्यप्-यौ ।

लि. ५।, वद ५।, क्यप् यौ १।।

ले परात् वद' क्यप् यौ स्त' ढभावे ।

ब्रह्मणा उद्यते इति ब्रह्मोद्या ब्रह्मवद्या कथा ।

## ९८६ । मृषोद्यं नित्यम् ।

मृषोद्य १।, नित्यम् १। ।

## ९८७ । भू-हनः क्यप् भावे न तश्च ।

भू-हन ५।, क्यप् ।१।, भावे ७।, न ।१।, त १।, च ।१। ।

ले' पराभ्यामाभ्यां क्यप् स्यात् भावे, हनो नस्य तश्च । ब्रह्मभूय ब्रह्मत्व ब्रह्महत्या ।

## ९८८ । धोः केलिमो ढघे ।

धो ५।, केलिम १।, ढघे ७। ।

धोः पर' केलिमः स्यात् ढघे ।

स्वयमेव पच्यन्ते इति पचेलिमाः तण्डुलाः । एव भिदे लिमा' माषाः ।

---

ब्रह्मणा उद्यत इति कर्म्मणि क्यपि यहस्वपेति जौ ब्रह्मोद्या, यौ ब्रह्मवद्या कथा । भावे तु ब्रह्मोद्य ब्रह्मवद्यम् । इत्यादौ स्याद्यन्तोपपदस्य कृदन्तेन धातुना समासो वक्तव्य । एवम् आशुग गिरिश वराह. उदधिक्रा इत्यादि । उपसर्गादन्यस्या-व्ययस्य कृदन्तेन धातुना समासो न स्यात् । अल कृत्वा कृत्वाल भोक्तु कान. कालो भोक्तुम् । उपसर्गात्तु प्रकृत्य अनुभूय । नञा निर्दिष्टमनित्यमिति न्यायात् कदाचिदन्यस्याव्ययस्यापि स्यात् । तेन नग अग इत्यादि मृषोद्यम् । यप्रत्यय निषेधार्थमिद तेन मृषावद्यमिति न स्यात् ॥९८६॥

ब्रह्मणो भाव ब्रह्मभूयम् । ब्रह्मणो हनन ब्रह्महत्या अभिधानात् स्त्रीत्वम् ॥९८७॥

ढश्च तत् घश्चेति ढघ तस्मिन् । धोरुपादान सर्वधातुप्राप्त्यर्थम् । तेन सर्व धातुभ्य केलिम. स्यात् कर्म्मकर्त्तरि । कित्त्वात् न गुण । स्वयमेव पच्यन्त इति पचेलिमास्तण्डुला । एव भिदेलिम काष्ठ' मुचेलिम वारि ॥९८८॥

## ৫৮৯। তে ত্যাঃ শক্যার্হে প্রৈষ্যানুজ্ঞাপ্রাপ্ত-কালে বা।

তে ১।৷।, ত্যা' ১।৷।, শক্য—প্রাপ্তকালে ৭।, বা।১।।

তব্যাদয়ো ত্যসঞ্জ্ঞাঃ স্যুঃ তে চ শক্যাদ্যর্থেষু বা স্যুঃ। বোঢ়ুং শক্যো বোঢব্যঃ বহনীয়ঃ বাহ্যঃ। স্তোতুমর্হঃ স্তোতব্যঃ স্তবনীয়ঃ স্তুত্যঃ। প্রেষিতস্ত্বং ত্বয়া গন্তব্যং গমনীয়ং গম্যম্। অনুজ্ঞাতস্ত্ব ত্বয়া অধ্যেতব্যম্ অধ্যয়নীয়ম্ অধ্যেয়ম্। প্রাপ্তস্তে কালঃ ত্বয়া ধ্যাতব্যং ধ্যানীয় ধ্যেয়ম্।

ইতি ত্যপাদঃ।

---

শক্যতেঽসৌ শক্যঃ কর্ম্মণি য, অর্হযোগ্যত্বে অন্তর্ভূতণ্যর্থত্বাৎ সকর্ম্মকত্বে কর্ম্মণি ঘ্যণি অর্হ্যতে যোগ্য ক্রিয়তেঽসাবিতি অর্হ্য। নির্যকার্ পাঠে তু কর্ম্মণি ঘ্যঞ্। শক্যশ্চ অর্হশ্চ প্রৈষ্যশ্চ অনুজ্ঞা চ প্রাপ্তকালশ্চেতি তস্মিন্। তে তব্য অনীয় য ঘ্যণ্ যক্যপ্ কেলিমা ত্যসঞ্জ্ঞা স্যু। পৃথক্‌যোগাৎ ভাবে ঢঘে চ ইতি দ্বয়োরনুবৃত্ত্যভাব ইত্যস্যৈবানুবৃত্তি। তে চ শক্যাদ্যর্থেষু কর্ম্মভাবয়ো স্যু। অত্র বাশব্দস্য সমুচ্চয়ার্থত্বাৎ শক্যাদ্যর্থাভাবেঽপি কেবলয়োঢভাবয়োশ্চ স্যুরিত্যর্থ। তত্র কেবলয়ো. কর্ম্মভাবয়োস্তু চেতব্য চয়নীয় চেয় পুষ্পমিত্যাদীনি প্রাগেব উদাহৃতবান্। ইদানীন্তু শক্যাদ্যর্থেষু উদাহরতি। বোঢুং শক্য ইত্যাদি বহৈঞ্ৌ প্রাপণে শক্যার্থে কর্ম্মণি তব্যে হ্বোডৌভাবিতি হস্য ঢত্বে সহবহোরিতি অকারস্য ওত্বে ঢভাত্তথোরিতি তস্য ধত্বে ষ্টুভিরিতি ধস্য ঢত্বে ঢ্রীঢ্রীতি ঢস্য লোপ। বোঢব্য স্তম্ভো ভার ইত্যর্থ এবং বহনীয়ো বাহ্য। স্তোতব্য ইতি স্তোতব্যো গুরু শিষ্যেণ স্তোতু যোগ্য' ক্রিয়তে ইত্যর্থ। এবং স্তবনীয় স্তুত্য.। অর্হশ্চেতি চকারাৎ শক্যার্থেঽপি। যথা কবিনা স্তোতব্যঃ স্তবনীয় স্তুত্যো রাজা স্তোতু শক্যতে ইত্যর্থ.। তব্যাদীনা কালবিশেষানুপদেশেঽপি ভবদ্ভূতভব্যে ইত্যত্র ভবিষ্যৎকালে ভব্য-শব্দপ্রয়োগাৎ তব্যাদয়ো ভবিষ্যৎকালে স্যুরিতি বোধ্যম্। কিঞ্চ ব্রহ্মণা উদ্যত ইতি ব্রহ্মোদ্যা ইতি জ্ঞাপকাৎ বর্ত্তমানেঽপি স্যুরিতি ॥৫৮৯॥

ইতি ত্যপাদঃ।

# द्वितीयः पादः—टनादिः।

---

## ९९०। टन् णकौ घे।

टन् णकौ १।, घे ७।

धोस्तृन्णकौ स्तो घे। करोति इति कर्त्ता, कारकः, दरिद्रायकः।

## ९९१। गलेचोपकपादहारकौ ढे।

गलेचोपक पादहारकौ १॥, ढे ७।

एतौ निपात्यौ ढे।

## ९९२। मार्हात् क्रमो नेम् टणः।

मार्हात् ५।, क्रम ५।, न ।१।, इम् ।१।, टण ६।।

प्रक्रान्ता उपक्रान्ता। अन्यत्र क्रमिता अतिक्रमिता।

टन् इति दन्त्यनकारो धावस्स्तटण इत्यादौ औणादिकप्रत्ययान्तानां पित्रा-दीनाम् अप्राप्तये विशेषार्थं। णकस्य णकारो वृद्ध्यर्थं दरिद्रायक इति दरिद्र आलोप इत्यत्र अकवर्जनादाकारलोपाभावे यन्ञ् णित्कृतीति यन्। तच्छील-धर्मतत्साधुकारिष्वपि कर्त्तरि टन् स्यात्। अविकल्प प्रविष्ट न तु तद्बाधितमिति न्यायात्। शील फलनिरपेक्षप्रवृत्ति। जनापवाद वदिता खल। धर्मः शास्त्रविहित आचार प्रयागादौ मुण्डयिता। साधु गन्ता जन इत्यादि। अतएव कारके शीलार्थं टन् इति स्वयमुक्तम् ॥९९०॥

एतौ कर्मणि वाच्ये णकप्रत्ययेन निपात्यौ। गले चुप्यतेऽसौ गलेचोपक अत्र लोरलुक्। पादाभ्यां ह्रियतेऽसौ पादहारक ॥९९१॥

मम् आत्मनेपदम् अर्हतीति मार्ह तस्मात्। आत्मनेपदप्राप्तियोग्यात् क्रमः परस्य टन् इम् न स्यात्। प्रक्रान्तेत्यादि प्रोपादारम्भ इति आत्मनेपदयोग्यत्वम्। मयोग्यात् किम्? क्रमिता अतिक्रमिता ॥९९२॥

## ৯৯৩ । গ্রহ নন্দি-পচাদের্ণিননান্ ঘে ।

গ্রহ-নন্দি পচাদি ৫।, ণিন্ অন-অন্ ।১।, ঘে ৭। ।

**গ্রহাদের্ণিন্, নন্দ্যাদেরনঃ পচাদেরন্ স্যাৎ ঘে। গ্রাহী স্থায়ী প্রপায়িণী, নন্দনঃ বিচক্ষণঃ জনার্দনঃ মধুসূদনঃ লবণঃ, পচঃ দেবঃ লেখ্যঃ, লোলুবঃ রোরুয়ঃ ।**

---

গ্রহশ্চ নন্দিশ্চ পচশ্চ তে আদয়ো যস্য স গ্রহনন্দিপচাদি তস্মাৎ। ণিন্ চ অনশ্চ অন্ চেতি। ণিন পূর্ব্বঋকারো বৃদ্ধ্যর্থঃ। অনোঽকারান্ত। অন্ ইত্যস্য নকারো যঙো লুর্ব্বেতি সূত্রে অনি তু নিত্যমিত্যত্র শস্যাদ ইতি অপ্রত্যয়স্য অপ্রাপ্তয়ে বিশেষার্থ গণাশ্চ প্রয়োগানুসারেণ বোধ্যা। গৃহ্লাতীতি গ্রাহী ণিত্বাৎ বৃদ্ধি স্থায়ীতি আদন্তত্বাৎ যন্ প্রপায়িণী ইতি নীচোঽন্তরদুর্গে ইতি ণত্বম্। নন্দয়তীতি নন্দন। অনে ঞেলোপ। বিচক্ষণ ইতি চক্ষ খ্যাঞ ইত্যত্র অনবর্জনান্ন খ্যাঞখ্যাঞৌ ঘ্‌র্ণ ইতি ণত্বম্। জনম্ অর্দয়তীতি জনার্দন। মধু সূদয়তীতি মধুসূদন। লুনাতীতি লবন খড্গ। রসে বাচ্যে লবণ ইতি ণত্বম্। পচতীতি পচ। দিব্যতীতি দেব অত কৃগৃজ্ঞেতি কপ্রত্যয়স্য বাধকোঽযম্। লেখ্য ইতি যঙন্তাৎ লেলীয় ইত্যস্মাদনি অনি তু নিত্যমিত্যুক্তের্যঙো লুক যঙলুক্ ক্বলোপে ইতি গুণনিষেধে শ্ন্ধ্বোরিতি য'। লোলুব ইতি যঙন্তাদনি যঙো লুকি শ্ন্ধ্বোরিত্যুব্। রুল ধ্বনৌ যঙির্ঘোঽজ্যরে ইতি দীর্ঘে রোরুযভাগাৎ অনি ক্রস্বোদন্তাৎ পরবিহিতস্য যঙো ন লুক্। তব্যানীয়যা ইত্যস্মাৎ ব্যণোরাবশ্যকে ইত্যত্র যথা ঢভাবে ইত্যনুবর্ত্ততে। তথা টসকৌ ঘে ইত্যস্মাৎ মণ্ডূকপ্লুতাধিকারাদত্রাপি ঘে ইত্যস্যানুবৃত্তাবপীষ্টসিদ্ধৌ অধিক ঘগ্রহণ যান্ জ্ঞাপয়তি তানহ বিব্রণোমি। যথা নঞপূর্ব্বাৎ যাচবদব্রজবসো ণিন্। ন যাচতীতি অযাচী। এবম্ অবাদী অব্রাজী অবাসী। এভ্য কিম্ অপঠিতা অপাঠক। নঞ পরাদজন্তাদচেতনে কর্ত্তরি। অকারী ধর্ম্মস্য বালাতপ। নঞ কিম্ ? ছেদকর্ত্তা খড্গ। অচেতনে কিম্ ? অকর্ত্তা বিপ্র'। দ্বিষো দেশী। বিষয়ী দেশ'। মনীষাদিত্বান্ন বৃদ্ধি'। ব্যভিপরেভুর্ব বিভাবী অভিভাবী পরিভাবী অত্র [মনীষাদিত্বাৎ গুণ'। এবম্ উৎসাহী উদাসী নিবেশী। পট্বীমাত্মান মন্যতে পটুমানিনী অত্র পুবৎ স্থ্যুক্ত ইতি পুবদ্ভাব.। জাত্যুপসর্গভিন্নপূর্ব্বকধাতোস্তাচ্ছীল্যে ণিন্।

ऋणभोजी। जातिपूर्वात् तु ब्राह्मणान् आमन्त्रयिता। अत्र शीलार्थे तृन् कर्मणि षष्ठी न स्यात्। उपसर्गपूर्वात् तु सभोक्ता उपभोक्ता। उन्माद द्विष द्रुह दुह दुष आक्रीड अनुरुध आयम आयस अतिचर अपचर व्याङ् मुष अभ्याहन परिदि-परिक्षिप एभ्यस्ताच्छील्ये णिन्। उन्मादी द्वेषी द्रोही दोही दोषी आक्रीडी अनुरोधी आयामी आयासी अतिचारी अपचारी व्यामोषी अभिघाती आघाती परिदेवी परिक्षेपी। उदासावी प्रत्यासावी ब्रह्मवादी साधुदायी इत्यादिषु ताच्छी-ल्याभावेऽपि ग्रहादित्वात णिन। कर्त्तुरुपमानात। खर इव क्रोशति खरक्रोशी एवम् उष्ट्रक्रोशी। जातिपूर्वत्वेऽपि ताच्छील्याभावेऽपि स्यादिति पृथग्वचनम व्रताभीक्ष्णयो। व्रत शास्त्रीयनियम.। आभीक्ष्ण्य पौनपुन्येन करणम्। अन्न वर्णभोजी नक्तभोजी अश्राद्धभोजी। आभीक्ष्ण्ये तु क्षीरपायिण उशीनरा। सौवीर-पायिणो बाह्लीका। कषायपायिणो गान्धारा। करणात् यजोऽतीते। अग्नि-ष्टोमेन यजते स्म। अग्निष्टोमयाजी। कदाचित् भविष्यत्कालेऽपि। कन्वो भावी ग्रामगामी पान्थ। एव कदाचित् वृद्ध्यभावे ग्रामगमीत्यपि स्यात्। एवम ऋणपरिशोधनेऽपि। मोचकऋणदायी। उभयत्र भव्यर्णार्थणिन कर्मणि न षष्ठी। शमादिभ्य शमी तमी दमी श्रमी क्षमी चमी क्लमी। एषु जनवध इति ह्रस्व। समी ज्वरित्वरिभ्याम्। सञ्ज्वरी सन्त्वरी। ज्वरतरो ञौ घटादित्वात ह्रस्वे त्यलोपे त्यलक्षणमिति न्यायात् ञिव्यवधानेन पुनर्न वृद्धि। वे कत्थसन्भक सलसेभ्य। विकत्थी विस्रम्भी विकासी विलासी। प्रान्मथद्रुवदवसलपेभ्य। प्रमाथी प्रद्रावी प्रवादी, वसि तु प्रवासी प्रलापी। परे मृदहिभ्याम्। परिसावी परिदाही। अस्त्यर्थे इना एव सिद्धौ णिन् करण ताच्छील्यविवक्षायामेभ्यस्तृणो निषेधादम्। परे क्षिपवटवदवादिदेविभ्यो णकश्च। परिक्षेपी परिक्षेपक परिवाटी परि वाटक परिवादी परिवादकः। परिवादयतीत्यर्थेऽप्येवम्। परिदेवी परिदेवक। अत्र ताच्छील्यविहितप्रत्ययेन असरूपोऽपि तृन् बाध्यते इति बोध्यम्। निन्द हिंस क्लिश खाद गण विनाशि व्याभाषासूयेभ्यो णक। निन्दक हिंसक क्लेशक खादक गणक विनाशक व्याभाषक. असूयक। उपसर्गात देविक्रुशाभ्याम्। आदेवक आक्रोशक। कर्मपूर्वकनिन्दार्थहन्तेरताच्छील्येऽपि णिन्। पितृघाती मातृघाती कुमारघाती। प्रात्जुसुव इन्। अयमनुबन्धशून्य। प्रजवी सू प्रसवे प्रसवी। इण जि दृचि विश्रि वम अभ्यम अव्ययेभ्यश्च एभ्यस्ताच्छील्ये इन् स्यात अत्ययी विजयी आदरी चयी, विश्रयी वमी अभ्यमी, न व्ययते अव्ययी। युज भज

## ९९४। चिक्लिद चक्नस चराचर चलाचल पतापत वदावद घनाघन पाटपटा वा।

चिक्लिद—पाटपटा १॥, वा।१।।

**एते अनन्ता निपात्यन्ते वा। पचे, क्लेदः क्नसः चरः चलः पतः वदः हनः पाटः।**

---

भुज त्यज सृज रन्ज भन्ज विविच सम्पृचिभ्यो घिनिस्ताच्छील्ये। शाकटायनानुरोधादस्य शेष इकार उच्चारणार्थ। युजिर युजीङ योगी भागी भोगी त्यागी ससर्गी चिति परे एषा जस्य ग.। रागी इत्यत्र तु रन्जोऽपघञोत्यादिना न लोपे घित्वात् हङ्गौ जस्य ग। भङ्गी विवेकी सम्पर्की। नन्दि वासि मदि दूषि साधि शोभि वड्डिभ्यो अन्तेभ्योऽसञ्ज्ञायामन। नन्दन वासन मदन, अत्र घटादित्वात् ह्रस्व। दूषण, अत्र दुषेरोदूरिति दीर्घ.। साधन शोभन वड्डन। सञ्ज्ञायान्तु चन्दन दर्पण विभीषण इत्यादि सह तप दम जल्प रम हृष श्वस स्पशादेरत्रान्तात्। सहन, तपन, दमन जल्पन रमण हृषण श्वसन, स्पशन इत्यादि। क्रोधकम्पभूषाशब्दार्थेभ्योऽन। क्रोधन कोपन, कम्पन चलन भूषण मण्डन, शब्दन रवण.। शब्दार्थादकर्मादेव। तेन विद्या पठिता विप्र। रुचादेश्व हसादे। रोचन वड्डन जुगुप्सन तितिक्षण मीमांसन वीभत्सन। हसादे किम्? एधिता। अत्रापि अकर्मकादेवेति बोध्य तेन वस्त्र वसिता ए। चक्रम्य दद्रम्य जु सृ गर्धि ज्वल शुच लष पत वदेभ्य। चङ्क्रमण दन्द्रमण उभयत्र हसाल्लोप इति अकारलोपे यकारलोप। जवन सरण, गर्द्धन ज्वलन शोचन अभिलषण प्रपतन प्रवदन। अत्र पतपदोर्भुकेन वाधितत्वात् अनस्य अप्राप्तौ वचनम्। तेन ताच्छील्ये प्रत्ययेन विशेषेण असरूपोऽपि सामान्यो वाध्यते इति बोध्यम्॥ ९९३॥

क्लिदु इर् क्लेदे। क्नसु म उद्धृतौ। चर गतौ। चल ज लतौ। पतल्लज गत्याम्। वदै वाचि। हन ल गतौ बधे। पट क च त्विषि। इत्यष्टभ्य पचादित्वात् अनि एते वा निपात्यन्ते। पचे क्लेद इत्यादि। पाट इति चुरादित्वात् ञौ वृद्धि.॥ ९९४॥

## ९९५। रात्रेर्मन् वा कृति।

रात्रे ६।, मन् ।१।, वा ।१।, कृति ७।

**रात्रेर्मन् स्यात् वा कृति। रात्रिञ्चरः रात्रिचरः।**

## ९९६। कॄ-गॄ-ज्ञा-प्रीजुङः को दुहो घङ् च।

कॄ-गॄ ज्ञा प्री-इजुङ ५।, क १।, दुह. ६।, घङ ।१।, च ।१।।

**कॄादेरिजुङश्च कः स्यात् तस्मिंश्च दुहो घङ् स्यात् घे।**
**किरः गिरः ज्ञः प्रियः क्षिपः भूरुहः कामदुघा गौः।**

---

रात्रे परव कृतोऽसम्भवात् कृदन्ते धातौ परे इत्यर्थः। रात्रौ चरतीति पचादित्वादनि अनेन मनि रात्रिञ्चरः पक्षे रात्रिचरः। एवं रात्रौ अटतीति रात्रिमटः रात्र्यटः। वाशब्दोऽत्र व्यवस्थावाची च। तेनेदं विवृणोमि। अगदसत्याम्भ्यां मन् कारे। अगदं करोतीति टात् वक्षिति षणि वृद्धौ कारे परे अगदस्य मनि अगदङ्कारः एवं सत्यङ्कारः। अस्तुङ्कारो देवविशेषः। अस्तु इत्यव्ययशब्दः। अगिलस्य गिले तिमि गिरतीति कॄगॄज्ञाप्रीति कप्रत्यये ऋदिरणाविति इरि ग्रोरल इत्यत्र वक्तव्यात् रेफस्य लत्वे अनेन मनि तिमिङ्गिलः एवं रिपुङ्गिलः। अगिलस्येति किम्? गिलगिलः, तिमिङ्गिलगिलः। तथाच अस्ति मत्स्यस्तिमिर्नाम शतयोजनविस्तृतः। तिमिङ्गिलगिलोऽप्यस्ति तद्गिलोऽप्यस्ति राघव इति॥ ९९५॥

इच् उङ् यस्य स इजुङ् कॄश्च गॄश्च ज्ञाश्च प्रीश्च इजुङ् चेति तस्मात्। दुहो घङ् चेति चकारात् इजुङन्तत्वात् के सतीत्यर्थः। कीरतीति किरः अत्र कप्रत्यये ऋदिरणाविति इर्। गिरतीति गिरः। जानातीति ज्ञः। परत्र आदन्तत्वात् डप्रत्ययेनैवेष्टसिद्धौ इह ज्ञाग्रहणं कथमिति चेन्न परत्र उपपदपूर्वादेव डो विधीयते इह तु केवलाज्जानाते कः इति भेदात्। प्रीणातीति प्रियः क्षिपतीति क्षिपः भुवि रोहतीति भूरुहः। कामं दोग्धीति कप्रत्यये कृते दुहस्य घङि स्त्रियामत आपि कामदुघा। चकारस्यानुक्तसमुच्चयार्थत्वात् तुन्दं परिमार्ष्टि तुन्दपरिमृजोऽलसः एव। अन्यत्र टात् षणि तुन्दपरिमार्जः शिशुः। एवं शोकमपनुदतीति शोकापनुदः आनन्दकर एव। अन्यत्र टात् षणि शोकापनादो धर्म्मकथकः। अत्र इजुङ्ग्राह निमित्तकतया विशेषेण कप्रत्ययेन कर्म्मपरत्वात् विशेषोऽपि सर्वधातुनिमित्तकतया

## ९९७। हन जनाङ्गमादेर्ड:।

हन जन आत् गमादि ५।, ड. १। ।

**हनो जन आदन्तात् गमादेश्च ड: स्यात् घे। शोकापह: वराह: सरसिज पङ्कजम् अज: गोद: द्विप: प्रह्व: आशुग: नग: गिरिश:, वारि चरतीति वार्चो हस:।**

## ९९८। घेटद्दृशपाघ्राध्म: श:।

घेट—ध्म ५।, श १। ।

**एभ्य: श: स्यात् घे। उद्धय: उत्पश्य: उत्पिव: उज्जिघ्र: उद्धम:।**

---

सामान्यो ढात् षण् बाध्यते। एवञ्च काकेभ्यो ग्रहीतव्या काकग्टहाशिला। इत्यत्र कर्म्मणि अपि क.॥ ९९६॥

हन च जन च आच्च गमादिश्चेति तस्मात्। शोकम् अपहन्तीति शोकापह वरम् आहन्तीति वराह। एव तमोपह दु खापह ज्वरापह। क्लीश हन्ति गच्छतीति क्लीशह वातपित्तकफापह विश्वामित्रदर्पापह। इत्यादि उदाहरण-दर्शनात् शोकवरादिकर्मपूर्वकतया अतिशेषेण डप्रत्ययेन सर्वकर्मपूर्वकसामान्यो हनचरगटक् बाध्यते। दारु आहन्तीत्यादि वाक्ये दार्वाघात एव चार्वाघात वर्णसङ्घात पाणिघात पाणिघ इत्यादौ निपात्यन्ते। सरसिज सरोज विभक्ते-रलुक् मनीषादित्वात्। पङ्काज्जायते पङ्कजम् न जायते अज.। एव द्विर्जायते द्विज। अत्र मनीषादित्वात् सूच. सस्य लोप परिज अभिज पुमांसमनुजात. पुमनुज। एव स्त्र्यनुज सहज प्रजायते प्रजा स्त्रियाम्। गा ददातीति गोद. द्वाभ्या पिवतीति द्विप प्रह्वयतीति प्रह्व अत्र डप्रत्ययप्राप्ते पूर्वावस्थायामशितिविषये एचोऽशित्येति आकारे आदन्तत्वात् ड.। आशु शीघ्र गच्छतीति आशुग। न गच्छतीति नग एवम् अग. गिरौ शेते गिरिश। परिखन्यते इति परिखा कर्मणि ड.। तथा आखूनामुत्थानम् आखूत्थ भावे ड'। एतौ निपात्यौ॥ ९९७॥

उद्धयतीति उद्धय.। शप्रत्ययोऽस्य शित्त्वात्रसञ्ज्ञाया शपि लोपोऽतोऽदेचोरित्य-कारलोप। एवमुत्पश्य इत्यादौ श्यादानेत्यादेशाश्च। साहचर्य्यात् पा इति भौवा:

९९९ । साहिसातिचेतिवेद्येजिधारिपारिलिम्प विन्दोऽगे: ।

साहि—विन्द ५।, अगे ५। ।

अगिभ्य: एभ्य: श: स्यात् घे । साहय: सातय: चेतय: वेदय: एजय: धारय: पारय: लिम्प: विन्द: गोविन्द: ।

१००० । टुनीभूज्वलाद्यास्रुसस्रोर्णो वा ।

दु—सस्रो ५।, ण १।, वा ।१। ।

अगिभ्य एभ्यो ण स्यात् घे वा । दाव: दव: नाय: नय: भाव: भव:, ज्वाल: ज्वल:, चाल: चल:, आस्राव: आस्रव:, सस्राव: संस्रव: ।

---

दिक एव । उद्वय इत्याद्युदाहरता सोपसर्गाणामि विधिरिति सूचितम् । अच-वापि प्रयोगत इत्युक्तं पश्यतीति पश्य व्याघ्र इ ज्ञानुगीधात् ड एव ॥९९८॥

सह जङ शक्तौ सात क सुखे इति सौत्र । चितीसज्ञाने विदन्मतौ एज् कम्पे धृ अड स्थितौ पृ लि पालने । एते ज्यन्ता । जिनिपौ शप ज लपि । विदऌ शपञो लाभे । इत्यष्ट । साहयतीति साहय शस्य श्नित्वात्रसञ्चाया अपि लोपोऽत इत्यकारलोप । एव सातय इत्यादि । लिम्प विन्द इत्युभयत्र तुदादित्वात् श मुचादित्वात् नुण् । उदेजयान् भूतगणान्यधेषादिति भट्टि । उद्शब्दस्य उपसर्गप्रतिरूपकत्वेन अनुपसर्गत्वात् । एव निलिम्प इत्यादौ च व्याख्येयम् ॥९९९॥

दुर्नीतीति दाव णित्त्वात् वृद्धि । पचे पचादित्वात् अनि दव । नयतीति नाय नय । भवतीति भाव भव. । ज्वलतीति ज्वाल ज्वल । चलतीति चाल चल । एव कोचतीति कोच, पचे इगुङ्त्वात् के कुच: । आस्रवतीति आस्राव आस्रव । सस्रवतीति सस्राव सस्रव । उभयत्र स्रु दंन्त्यादि । तथाच अवश्यायकणास्रावाश्रास्रमुक्ताफलत्विष । कुर्वन्ति चितसस्राव चलत्पर्णायसम्भृता इति भट्टि । अगे किम् ? प्रदव इत्यादि । आसर्सोरित्यनेनैवेष्टसिद्धौ आसुसस्रोरिति गौरव ज्ञापयति । गत्यातेरपि घे णो वा स्यादिति । प्राह्मौ

## ১০০১। শ্বসব্যধেন তন দাবহৃসঃ।

শ্বস—হৃস ৫।।

এভ্যো ণঃ স্যাৎ ঘে। শ্বাসঃ ব্যাধঃ প্রত্যায়ঃ অবতানঃ দায়ঃ ধায়ঃ অবহারঃ অবসায়ঃ।

## ১০০২। নৃত্-খন-রন্জঃ ষকঃ।

নৃত্ খন রন্জ. ৫।, ষক ১।।

এভ্যঃ ষকঃ স্যাৎ ঘে। নর্ত্তকী খনকী রজকী।

## ১০০৩। গো ষনট্-থকৌ।

গ ১।, ষনট্-থকৌ ১॥।

গায়তেঃ এতৌ ঘে স্তঃ। গায়নী গাথকঃ।

---

হিংসজলজন্তু। গ্রহঃ সূর্য্যাদিঃ। এবমস্মাৎ কপ্রত্যয়ে গ্রহস্থপায়োরিতি ঞৌ গৃহ্ণাতীতি গৃহ গৃহা. ॥১০০০॥

হৃশ্চ সাশ্চ হৃসৌ অবাৎ হৃসৌ অবহৃসৌ। শ্বসশ্চ ব্যধশ্চ ইন চ তন চ দাশ্চ অবহৃসৌ চেতি তস্মাৎ। পৃথগ্‌যোগো নিত্যার্থোঽগেরিত্যস্য নিবৃত্ত্যর্থশ্চ। শ্বসিতীতি শ্বাস বিধ্যতীতি ব্যাধ.। প্রত্যেতীতি প্রত্যায়। অবতনোতীতি অবতান। দা ইতি সংজ্ঞা। তেন দদাতীতি দায় দধাতীতি ধায.। অবহরতীতি অবহার। সা ইতি ষোয নাশে অবস্যতীতি অবসায। এষু আদন্তত্বাৎ যন্ দিহি লিহি শ্লিষিভ্য কস্য বাধকো ণো বাচ্য। দেগ্ধীতি দেহ লেঢীতি লেহঃ। শ্লিষ্যতীতি শ্লেষ। তথা অবাৎ দুশ্যাভ্যাং ণ। অবদুনোতীতি অবদাবঃ অবশ্যায়তে ইতি অবশ্যায ॥১০০১॥

নৃত্যতীতি নর্ত্তকী খনতীতি খনকী, রজতীতি রজকী ষকে পরে ন লোপ.। সর্ব্বত্র ষিত্বাদীপ্ ॥১০০২॥

গায়তীতি গায়নী ষিতি আদন্তত্বাৎ যন্ টিত্বাদীপ্ ॥১০০৩॥

## १००४। हायनः।

हायन १।।

अयं निपात्यते।

भावं जहातीति हायनो वर्षः। अम्बु जहातीति हायनो व्रीहिः।

## १००५। प्रु द्रु स्रु सृ ल्वोऽकः।

प्रु—लू ५।, अक १।।

एभ्योऽकः स्यात् घे। प्रवकः द्रवकः स्रवकः सरकः लवकः।

## १००६। आशिषि।

आशिषि ७।।

जीवतादिति जीवकः।

## १००७। नाम्नन्ये तिक् च।

नाम्नि ७।, अन्ये १॥, तिक् १।, च ।१। ।

धीराशिषि अन्येऽपि क्तः स्युः, तिक् च संज्ञायाम्। देवरातः रन्ति.।

हायन। वत्सरव्रीहिभ्यामन्यत्र हात। निपातो ह्यर्थविशेषे इत्युक्ते ॥१००४

एभ्योऽक स्यात् घे साधुकारिणि। साधु प्रवते प्रवक। एव द्रवतीति द्रवक लुनातीति लवक। साधुकारिणि किम्? प्रोता ॥१००५॥

पृथग्योगात् सर्वधातुभ्योऽक स्यात् आशिषि कर्त्तरि। जीवतादिति जीवक एव नन्दक वर्द्धक ॥१००६॥

धीराशिषि गम्यमानाया सज्ञाया कर्त्तरि। अन्येऽपि क्त स्यु तिक् च स्यात् देवाय रायात् देवरात। एव देवाय देयात् देवदत्त। यज्ञाय देयात् यज्ञदत्त एषु कर्त्तरि क्त। एवञ्च अस्य वीरो भूयादिति वीरभू अस्य मित्र भूयादि मित्रभू। इत्यादौ क्विप्। तिकि तु रमता रन्ति। अत्र वनतनेयत्र तिग्वर्जनान्न लोप। एव तनुता तन्ति अग्निर्जभ्यात् इति अग्निभूति इत्यादि ॥१००७॥

## १००८। सति साती वा ।

सति साती १॥, वा ।१। ।

**एतौ निपात्यौ । सन्तिश्च ।**

## १००९। ढात् षण् ।

ढात् ५।, षण् ।१। ।

**ढात् परात् धो' षण् स्यात् घे ।**

**कुम्भकारः अघट घट करोतीति घटीकारः ।**

## १०१०। हन-चर-गः टक् ।

हन चर-ग ५।, टक् ।१। ।

**ढात् परेभ्य एभ्य' टक् स्यात् घे । पापघ्न' कुरुचर' सामगः ।**

---

सतिश्च सातिश्च सतिसाती । सनोतेराशिषि तिगन्तस्य एतौ वा निपात्यौ । पक्षे सनुतादिति वाक्ये तिकि क्वते ह्वयतेरिति इम् निषेधे वनतनेत्यत तिग्वर्जनात् नलोपाभावे सन्ति ॥१००८॥

कुम्भ करोतीति 'कुम्भकार । महान्त घट करोति अत्र सापेक्षत्वात् न स्यात् । अघट घट करोतीति घटीकार । अत्र तु सापेक्षत्वेऽपि अभिधानात् स्यादेव । आदित्य पश्यति हिमवन्त शृणोति ब्रह्म वदति ग्राम गच्छति इत्यादौ अनभिधानात् न स्यात् । ह्वयति वयति मातिभ्य आदन्तात् डप्रत्ययस्य बाधक षण् वाच्य । स्वर्गह्वाय तन्तुवाय' धान्यमाय । एव कर्म्मपूर्वकात् सोपसर्गा-टादन्तात् कदाचित् डबाधक षण् वाच्य गोसन्दाय । ईक्षक्षमाचरिरमिभ्य' षणो बाधकोऽन् वाच्य । सुखप्रतीक्षा बहुक्षमा कल्याणाचारा मनोरमा । अर्हि-शीलिकामिभक्षिभ्यो वा । पूजार्हा पूजार्ही मासशीला मासशीली पुत्रकामा पुत्रकामी मासभक्षा मासभक्षी । श्वान पचतीति श्वपाकश्वपचौ निपात्यौ ॥१००९॥

पाप हन्तीति पापघ्न कित्वात् गुणे हनगमित्यु ङ लोपे हनोघ्नी घ्न. । कुरून् चरतीति कुरुचर । साम गायतीति सामग । अत्र डस्येचौत्याकारलोप. । टीत्वादीपि पापघ्नीत्यादि । एव वातघ्न पित्तघ्न' कफघ्न शत्रुघ्न इत्यादि । लक्षणे जायापतिभ्या हनः । जायाघ्नी वृषल पतिघ्नी पाणिरेखा । हस्तिवाहकपाटेभ्यो

## १०११ । स्ट-कुः टः ।

स्ट कु ५।, ट १।।

ढात् पराभ्याम् आभ्यां टः स्यात् घे। पुरःसरो, यशस्करी विद्या। भास्करः क्षपाकरः, कर्म्मकरी दासी।

---

हन शक्तौ। हस्तिघ्न वाहघ्न कपाटघ्न। नगरादहस्तिनि। नगरघ्नोऽहिः। अहस्तिनि किम्? नगरघाती हस्ती। ब्रह्मभ्रूणवृत्रवाड्ननोऽतीते क्विव। ब्रह्माणं हतवान् ब्रह्महा एवं भ्रूणहा वृत्रहा। सुरा सीधुभ्यामगे पिबते टक् वाच्यः। सुरापी सीधुपी स्त्री। अगे किम्? सुराप्रपाय। पिबते किम्? सुरां पातीति सुरापाय। कदाचिद्धन्ते घमपि दृश्यते। आखुघात चौरघात. श्वघ्न इत्यादि॥ १०१०॥

पुरोऽग्र सरतीति पुर सरी। यश करोतीति यशस्करी विद्या। टित्त्वादीप्। भास करोतीति भास्करः। क्षपा करोतीति क्षपाकर। कर्म्मकरी दासी। पुरोऽग्रेऽग्रतोभ्य सरते टा वाच्य। पुरसर अग्रेसर। अत्र सप्तम्या अलुगभिधानात्। अग्रत सर। पूर्वात् कर्त्तुश्च। पूर्वो भूत्वा सरतीति पूर्वसर.। पूर्वात् कर्त्तुः किम्? पूर्वं सरतीति पूर्वसारः। एवं तदनुसार इत्यादि। कुम्भकार इत्यादिकमुदाहरतापि इह कञो ग्रहण यानि ज्ञापयति तान्यह विवृणोमि। यथा कर्म्मण: परात् कञो हेतुताच्छील्यानुलोम्येष्वर्थेषु कर्त्तरि ट स्यात्। हेतु प्रतीतशक्तिक साधनम्। ताच्छील्य फलनिरपेक्षा प्रवृत्तिः। आनुलोम्यम् अनुकूलता। हेतौ यश करोतीति यशस्करी। ताच्छील्ये जनापवादकर खल। आनुलोम्ये श्राद्धकर इत्यादि। एवं तदाद्यादिभ्या परात् कञ टक्। तदादिर्यथा तत्करः मत्कर एतत्करः इदङ्कर किङ्कर। आद्यादिर्यथा। आदिकर अन्तकर बहुकर बाहुकर अहस्कर विभाकर निशाकर एककर द्विकर त्रिकर चतुष्कर प्रभाकर भास्कर चित्रकर. नान्दीकर श्रीकरः लिपिकर बलिकरः भक्तिकरः चेत्रकर: जङ्घाकर धनुष्कर अरुष्कर रजनीकर क्षपाकर. चण्डाकर दिनकर दिवाकर इत्यादि। कर्म्मशब्दात् परात् कञो भृतौ ट। भृतिः कर्म्ममूल्यम्। कर्मकरी वैतनिकः। कर्मकरी दासी अन्यत्र कर्मकार.। शब्द श्लोक कलह गाथा वैर चाटु सूत्र मन्त्र ग्रन्थ कुम्भ क्रम पद सूपान्यादि परात् कञस्तु हेत्वाद्यर्थे तदभावेऽपि घमेव। शब्दकार, श्लोककार, कलहकार, गाथा

**१०१२। शकृत्-स्तम्बात् दृति-नाथात् फले-रजो-मलात् देववातात् कृ-हृ-ग्रहाप इः।**

शकृत्-स्तम्बात् ५।, दृति नाथात् ५।, फले रजस् मलात् ५।, देववातात् ५।, कृ हृ ग्रह आप ५।, इ, १।।

**एभ्यः परेभ्यः क्रमादेतेभ्यः इः स्यात् घे। शकृत्करिः वत्सः, स्तम्बकरिः व्रीहिः, दृतिहरिः श्वा, नाथहरिः पशुः, फलेग्रहिः रजोग्रहिः मलग्रहिः देवापिः वातापिः।**

**१०१३। कुक्ष्यात्मोदरात् भृः खिः।**

कुक्षि आत्मन्-उदरात् ५।, भृ ५।, खि १।।

**एभ्यः परात् भृञः खिः स्यात् घे।**

---

कार वैरकार चाटुकार सूत्रकार मन्त्रकार ग्रन्थकार कुम्भकार कर्मकारः पदकार सूपकार अन्धकार इत्यादि। ढात् परात् हञोऽवहनेऽन्। अंशहरो दायादः, व्याधिहरम् औषधं, दुःखहरा सम्पत्तिः। वहने तु भारहारी वैतनिकः। वयोबोधकवहने च। कवचहरो युवा। आङस्ताच्छील्ये। पुष्पाहर कुशाहर। अदण्डसूत्रात् प्रहरणात् धृञ। वज्रधरः चक्रधर गदाधर शूलधर धनुर्द्धर। अदण्डसूत्रादिति किम्? दण्डधार सूत्रधार। दण्डधर इत्यपि दृश्यते। सूत्र-वर्ज्जनात् प्रहरणभिन्नादपि भूधर जटाधर महीधर गङ्गाधर विद्याधर। दण्डा-दिभ्यो ग्रहो वा। दण्डग्रह दण्डग्राहः धनुर्ग्रह धनुर्ग्राह। शक्तिलाङ्गूलाङ्कुशयष्टि-तोमरसूत्रघटघटीभ्यो ग्रहोऽन्। शक्तिं गृह्णातीति शक्तिग्रहः। एवं लाङ्गूलग्रह अङ्कुशग्रह यष्टिग्रह तोमरग्रह सूत्रग्रह घटग्रह घटीग्रह ॥ १०११ ॥

पृथक् पदकरणं यथासङ्ख्यार्थम्। तेन शकृत्स्तम्बाभ्यां कृञ दृतिनाथाभ्यां हृञ फलेरजोमलेभ्यो ग्रह देववाताभ्यामापः पर इ स्यात् घे इत्यर्थ। शकृत्-करिरित्यादि। शकृत् तालव्यादिर्विष्ठावाचक। शकृत् करोतीति शकृत्करि-र्वत्स। एवं स्तम्बकरिर्व्रीहिः। दृतिश्चर्मता हरतीति दृतिहरिः श्वा। एवं नाथहरि पशु। फलं गृह्णातीति फलेग्रहि। फले इत्येकारान्तग्रहणादकारस्य एकारः एवं रजोग्रहि मलग्रहि। देवम् आप्नोतीति देवापि एवं वातापिः ॥ १०१२ ॥

कुक्षिश्च आत्मा च उदरश्चेति तस्मात् ॥ १०१३ ॥

## १०१४ । खित्यव्याजरुषो मन्खौ ह्रीक्षान्तत्वं त्वेकाजिचः ।

खिति ७, अव्याजरुष ६।, मन्खौ १॥, ह्रीक्षान्तत्व १।, तु।१।, एकाजिच ६।।

व्यवर्जस्याजन्तस्यारुषश्च मन् स्यात् खश्च एकाजिचस्तु ह्रीक्षान्तत्व स्यात् खिदन्ते धौ परे। कुक्षिम्भरिः आत्मम्भरिः उदरम्भरिः ।

## १०१५ । खश्नेजेः ।

खश् ।१।, एजे ५। ।

ढात् परात् एजयतेः खश् स्यात् घे । जनमेजयः ।

## १०१६ । मन्यात् स्वार्थे ।

मन्यात् ५।, स्वार्थे ७। ।

आत्मानं गां मन्यते गामन्यः प्रियमन्या ।

नास्ति व्य यत्र सोऽव्य अव्यश्चासौ अच्चेति अव्याच् अव्याच्च अरुस् च अव्याजरुस् तस्य ह्री द्वितीया तस्या क्षम् एकवचन ह्रीक्षान् ... यस्य न ह्रीक्षान्त तस्य भाव ह्रीक्षान्तत्वम् । एकाचासौ इच् इजन्तश्चेति एकाजिच् तस्य । कुक्षि बिभर्त्ति इति कुक्षिम्भरिः । पूर्वात् खिप्रत्ययेऽनेन पूर्वस्य मन् । आत्मान बिभर्त्तीति आत्मम्भरि । अत्र तौलुकि विरामे नस्य लुपि नञा निर्दिष्टमनित्यमिति न्यायात् तदादिविधेर्निषेधस्यानित्यत्वे मन् स्यात् एवम् उदरम्भरि ॥१०१४॥

एजेरिति एज्, कम्पे इत्यस्य ञ्यन्तस्य ग्रहणम् । जनम् एजयतीति जनमेजय । खश्, शित्त्वाद्रत्वे अपि ञेर्लोपाभावे लोपोऽत इत्यकारलोपे पूर्वस्य मन् ॥१०१५॥

ढात् परात् मन्यते, खश् स्यात् कर्त्तरि स्वार्थे स्वनिमित्तधात्वर्थे । आत्मान गा मन्यते इति गामन्य । अत्र खश्, शित्त्वाद्रत्वे दिवसुतुर्द्धति श्यनि लोपोऽत इत्यकारलोपे गोशब्दस्य द्वितीयैकवचनान्तत्वम् । एव प्रियमन्या ॥१०१६॥

## ১০১৭। মুঞ্জ কূলাস্যপুষ্পাৎ ধেটঃ।

মুঞ্জ-কূল-আস্য পুষ্পাৎ ৫।, ধেট ৫।।

এভ্যঃ পরাৎ ধেটঃ খশ্ স্যাৎ ঘে। মুঞ্জন্ধয়ঃ কূলন্ধয়ঃ আস্যন্ধয়ঃ পুষ্পন্ধয়ঃ মুঞ্জন্ধয়ী, ধেটঃ টিত্বাদীপ্। [২৫৭]।

## ১০১৮। নাড়ী-শুনী-স্তন-কর-মুষ্টি-পাণি-নাসিকাৎ ধমশ্চ।

নাড়ী-নাসিকাৎ ৫।, ধম ৫।, চ ।১।

এভ্যঃ পরাৎ ধ্মো ধেটশ্চ খশ্ স্যাৎ ঘে। নাড়িন্ধমঃ নাড়িন্ধয়ঃ।

## ১০১৯। ঘটী-খারী-বাতাদ্ বিধ্বরুস্তিলাদসূর্য্যোগ্রাল্ললাটা-ন্মিত-নখ-মানাৎ ধ্মা-তুদ-দৃশ তপ-পচঃ।

ঘটী খারী বাতাৎ ৫।, বিধু অরুস্ তিলাৎ ৫।,অসূর্য্য-উগ্রাৎ ৫।, ললাটাত৫।, মিত নখ মানাৎ ৫।, ধ্মা-তুদ দৃশ তপ-পচ ৫।।

এভ্যঃ পরেভ্যঃ ক্রমাদেতেভ্যঃ খশ্ স্যাৎ ঘে। ঘটিন্ধমঃ, খারিন্ধমঃ বাতন্ধমঃ বিধুন্তুদঃ, অরুন্তুদঃ তিলন্তুদঃ অসূর্য্যম্পশ্যঃ উগ্রম্পশ্যঃ ললাটন্তপঃ মিতম্পচঃ,নখম্পচঃ দ্রোণম্পচঃ।

---

মুঞ্জ ধয়তীতি মুঞ্জন্ধয়। অত্র শিতি পরে এচোঽশিত্যা ইত্যস্যাপ্রাপ্তৌ একারস্যায়। খিদন্তে পরে পূর্ব্বস্য মন্। এব কূলন্ধয় ইত্যাদি। ধেটঃ টিত্বাদিতি যত্র ধেটধাতোরেকারস্য অয়াদেশঃ স্যাৎ তত্রৈব টিত্বাদীপ্ ইত্যর্থ। তেন মুঞ্জন্ধয়ী। এব ধেটদৃশপাঘ্রেতি শপ্রত্যয়ে উদ্ধয়ী। নাড়ীশুনীত্যাদিনা খশ্প্রত্যয়ে নাড়ীন্ধয়ীত্যাদি। অয়াদেশাভাবে তু ধাতব্যা ধানীয়া ইত্যাদৌ ন ঈপ্ ॥১০১৭॥

নাড়ী চ শুনী চ স্তনশ্চ করস্য মুষ্টিশ্চ পাণিশ্চ নাসিকা চেতি তস্মাৎ। নাড়ীং ধমতীতি নাড়ীন্ধম। খশ্ শিত্বাদন্তে অপি ধমাদেশে খিত্বাৎ পূর্ব্বস্য মন্ খৌ। এব নাড়িন্ধয় ইত্যাদি ॥১০১৮॥

পৃথকপদকরণ মাদিভির্যথাসংখ্যার্থম্। তেন ঘটীখারীবাতেভ্যো ধ্মঃ বিধ্বরু-

१०२०। कूलादुद्रुजुद्वहः।

कूलात् ५।, उद्-रुज उद्-वह ५।।

कूलात् आभ्यां खश् स्यात् घे। कूलमुद्रुजा नदी, कूलमुद्वहः समुद्रः।

१०२१। प्रियवशाद्भयर्त्तिमेघात् सर्वकूलाभ्रकरीषात् वद-कृ-कषः खः।

प्रियवशात् ५।, भय ऋति मेघात् ५।, सर्व कूल अभ्र करीषात् ५।, वद कृ-कष ५।, ख १।।

एभ्यः परेभ्यः क्रमादेतेभ्यः खः स्यात् घे। प्रियंवदः वशंवदः भयङ्करः ऋतिङ्करः मेघङ्करः सर्वङ्कषः कूलङ्कषः अभ्रङ्कषः करीषङ्कषः।

---

सिलिभ स्तुद असूर्य्योग्राभ्या दृश ललाटात्तप मितनखमानेभ्य पच पर खश् स्यात् कर्त्तरि। घटी धमतीति घटिन्धम। खश शित्वात् अपि धमादेशे खित्वात पूर्वस्य मन् स्यौ। एव खरी गर्गरीं धमतीति खरिन्धम.। खारीति पाठ परिमाणविशेष। अरुस्तुदतीति अरुन्तुद. अत खश शित्वादसञ्ज्ञाया दिवसुतुर्दति अप्रत्यये तस्य ङित्वाद्गुणाभावे लोपोऽत इत्यकारलोपे पूर्वस्य मनि स्यादे सो लोप इति सलोप। सूर्य्य न पश्यतीति असूर्य्यम्पश्य। मानमिह परिमाणवाचक द्रोणाढकादि, तेन द्रोणम्पच आढकम्पच इत्यादि। अन्यत् सुगमम् ॥१०१९॥

उभयत्र उदो ग्रहण स्पष्टार्थम्। रुजशो भङ्गे। कूलमुद्रुजतीति कूलमुद्रुज। खश. शित्वादत्वे दिवसुतुर्दति अप्रत्यये ङित्वात् गुणाभावे पूर्वस्य मन्। एव कूलमुद्वह ॥१०२०॥

पृथक्पदकरण वदादिभिर्यथासङ्ख्यार्थम्। तेन प्रियवशाभ्या वद भयर्त्ति-मेघेभ्य. कृञ सर्वकूलाभ्रकरीषेभ्य. कष पर. ख स्यात् प्रिय वदति कथयतीति प्रियवद एव वशवद। भय करोतीति भयङ्कर. एवम् ऋतिङ्कर मेघङ्कर.। सर्व कषति हन्तीति सर्वङ्कष.। एव कूलङ्कष. अभ्रङ्कष. करीषङ्कष. ॥१०२१॥

ক্রিয়তেঽনেনেতি নগ্নঙ্করণং দ্যূতং, পলিতঙ্করণং প্রিয়ঙ্করণম্ অন্ধঙ্করণঃ শোকঃ, স্থূলঙ্করণং দধি, সুভগঙ্করণং রূপম্, আঢ্যঙ্করণং বিত্তম্।

## ১০২৭। ভুবো ঘে খিষ্ণু-খুকঞৌ।

ভুব ৫।, ঘে ৭।, খিষ্ণু খুকঞৌ ১॥।

নগ্নাদিভ্যঃ পরাৎ ভুবস্থ্বর্থে এতৌ ঘে স্তঃ। নগ্নম্ভবিষ্ণুঃ নগ্নম্ভাবুকঃ।

## ১০২৮। ঢাৎ ভজ-বহ-সহো ৱিণ্।

ঢাৎ ৫।, ভজ-বহ সহ ৫।, ৱিণ্।১।।

ঢাৎ পরেভ্য এভ্যো ৱিণ্ স্যাৎ। সুখভাক্ প্রষ্ঠবাট্ তুরাষাট্।

## ১০২৯। অনডুচ্ছ্বেতবাহাদিঃ।

অনডুচ্ছ্বেতবাহাদি ১।।

এতে ৱিণন্তা নিপাত্যন্তে। অনো বহতীতি অনড্বান্ বৃষঃ। শ্বেতৈরুহ্যতে শ্বেতবাঃ ইন্দ্রঃ। অবযজতীতি অবযাঃ,

---

অনগ্নো নগ্নঃ ক্রিয়তেঽনেনেতি নগ্নঙ্করণ খিত্বাৎ পূর্বস্য মন্। অপ্রিয় প্রিয় ক্রিয়তেঽনেনেতি প্রিয়ঙ্করণী সেবা টিত্বাদীপ্। চ্ব্যর্থে প্রত্যয়বিধানাৎ চ্বিপ্রত্যয়ী ন স্যাৎ। তেন নগ্নীকরোত্যনেনেত্যত্র খনট্ ন স্যাৎ। অনট্ চ ন স্যাদিত্যেকে ॥১০২৬॥

অনগ্নো নগ্নো ভবতীতি নগ্নম্ভবিষ্ণু. খিত্বাৎ পূর্বস্য মন্। এব পলিতম্ভবিষ্ণুঃ প্রিয়ম্ভবিষ্ণুঃ অন্ধম্ভবিষ্ণু স্থূলম্ভবিষ্ণু সুভগম্ভবিষ্ণু আঢ্যম্ভবিষ্ণু। এব নগ্নম্ভাবুক ইত্যাদৌ খিত্বাৎ পূর্বস্য মন্ ঞিত্বাৎ বৃদ্ধি ॥১০২৭॥

সুখ ভজতীতি সুখভাক্ ৱিণ্ ইকার উচ্চারণার্থঃ। ণকারো বৃদ্ধ্যর্থ ত্বো বমাত্র ইতি বস্য লোপ। প্রষ্ঠ পুরোগ ত বহতীতি প্রষ্ঠবাট্। তুরা বেগ তুরা সহতে তুরাষাট্ অত্র হোঢোভাবিতি ঢত্বে শাসবসঘসসাঢাচ্চেতি ষত্বম্। ভজতেরুপসর্গপূর্বকাদপি ৱিণিত্যেকে। প্রভাক্ বিভাক্। সহি বহিভ্যা ছন্দস্যেব ৱিণিত্যেকে ॥১০২৮॥

उक्थानि शंसतीति उक्थशाः यजमानः। पुरोडाः हविः, पुरोडाशः।

**१०३०। क्रम गम खन सन जनो विट्।**

क्रम—जनः ५।, विट् ।१।।

एभ्यो विट् स्यात् घे।

**१०३१। विड्वनोर्ङा।**

विड वनी ७॥, ङा ।१।।

धोरन्त्यस्य ङा स्यात् विटि वनि च। उदधिक्राः अग्रेगाः विसखाः गोषाः अब्जाः।

**१०३२। त्रासुसिस् मन् क्वनिप् वनिप् विच् क्विपः।**

त्रासु—क्विप १॥।

धोरेते स्युः के भावे च। नीयते अनेनेति नेत्र दष्ट्रा

श्वेतवाह आदिर्यस्य स श्वेतवाहादि. अत्र विरामेऽपि डसङ्गोऽप्राप्ति मूकत्वात् अन् शकट वहतीति अनड्वान् वृष.। श्वेतैरुह्यते इति श्वेतवा इन्द्र। अत्र कर्तु परात् वहे. कर्मणि वाच्ये विण्। अवयजतीत्यवया कर्मपूर्वकत्वाभावेऽपि विण्। उक्थानि शसतीति उक्थशा' यजमान, अ॰ तकारस्य थकारे शसतेर्नलोपे वृद्धिश्च। पुर आदौ दाश्यते यत् स पुरोडा हवि, अत्र कर्मणि विणि दकारस्य डकार' पुंस्त्वञ्च। पुरोडाश इत्यकारान्तोऽपि तथाच सदा पुरोडाश पवित्रिताधर इति॥ १०२९॥

अग्रे गच्छतीति अग्रेगा इत्यधिकरणादपि विट् स्यात् इत्याशङ्क्य ढादिति नोक्तम्॥ १०३०॥

विट् साहचर्यात् गुणी वन्नेव ग्राह्य'। तेन सुपीवा प्रातरित्वा इत्यादौ क्वनिपि न प्रसङ्ग। उदधि क्रामतीति उदधिक्रा' पूर्वेण विट्। गा सनति ददातीति गोषा इति सनधातो सस्य कृतत्वात् षत्वम् अप्सु जायते अब्जा॥ १०३१॥

নদ্ধ্রী যোত্রম্, উরুব্যচাঃ নৃচক্ষাঃ রজঃ বক্ষুঃ সর্পিঃ সুষ্ঠু দদা-তীতি সুদামা গন্মা ।

## ১০৩৩ । হব্-ব-তেন্নেম্ ।

হব্-ব-তে ৬।, ন ।১।, ইম্ ।১। ।

**হতো হবস্য বস্য তেশ্চ ইম্ ন স্যাৎ। সুশর্ম্মা সুপীবা প্রাতরিত্বা সুত্বা, ভূরিদাবা বারিজাবা সোমপাঃ রেট্ রীট্ ক্রুঙ্ যুঙ্ প্রত্যঙ্ অক্ষদ্যূঃ মিত্রশীঃ আশীঃ গীঃ বহুভ্রট্ বহুভ্রট্ ঘৃতস্পৃক্ শস্যাৎ ক্রাব্যাৎ।**

---

বশ্চ অস্ চ উস্ চ ইস্ চ মন্ চ ক্বনিপ্ চ বিচ্চ ক্বিপ্ চ তে। পৃথগ্-যোগাৎ সর্বধাতুভ্যো বিহিতা অপি প্রয়োগানুসারাৎ ধাতুবিশেষেভ্য এব কারকবিশেষে ভাবে চ স্যুরিতি বোধ্যম্। অন্যথা বল্লম্ ইত্যাদ্যপপ্রয়োগাপত্তে । নীয়তেঽনেনেতি নেত্রম্। দশ্যতেঽনয়েতি দংষ্ট্রা অত্র নস্যানুস্বারে শক্বাজেতি ষঙ্ষ্টুভিরিতি বস্য চ টত্বে অভিধানাৎ স্ত্রীত্বে আপ্। নহ্যতেঽনয়েতি নদ্ধ্রী রজ্জু । অত্র নহো ধঙ্ ভাবিতি হস্য ঢভাত্তথোরিতি তস্য ধত্বে ঝপ্ঝসীরিতি পূর্ব ধস্য দত্বেঽভিধানাৎ স্ত্রীত্বে নদাদিত্বাৎ ঈপ্। যূয়তেঽনেনেতি যোত্রম্। এব যুজির্যোগে যোক্ত্র দাত্র লূনৌ দাত্র পা পানে পাত্রং তুদ ব্যথে তোত্রং মিহৌ সিচি মেঢ্রং ষিণগত্র বর্ম্মে সেত্র সিচ পশ্যেন্ সেক্ত্র ষ্টুঞ্জল স্তুতৌ স্তোত্র গ্রস বধে শস্ত্রম্ অস্য ইব্ অস্ত্র পূত্র শোধে পোত্র পতল্লজ পত্র মসজি দ্যুতৌ মস্ত্রা অম গতৌ অন্ত্রীত্যাদি। এষু যে সেমস্তেভ্যো হ্রব বর্তেরিতি বক্ষ্যমাণাদিম্ নিষেধ । অসমাহ। উরু মহান্ত বিচতি উরুব্যচা ব্যচোজিরিত্যত্র অস্ বর্জনাৎ ন জি.। নর চষ্টে নৃচক্ষা চক্ষ কসাত্র ইত্যত্র অস্ বর্জনাৎ ন আদেশ । রজ্যতেঽনেনেতি রজ' রঞ্জোঽপরকেতি ন লোপ । এব বিধশ্চ বিধৌ বিধতীতি বেধা । উসমাহ। চক্ষত্রঞ বটে অনেকার্থত্বাৎ দর্শ-নার্থ । চষ্টেঽনেনেতি চক্ষু চক্ষ ক্সাত্র ইত্যত্র উস্ বর্জনাৎ ন আদেশ । এব ধন রবে ধনু । ইসমাহ। সর্পতীতি সর্পি. এব হ্রয়তে যত্তদ্ববি । মনমাহ। সুষ্ঠু দদাতীতি সুদামা। গচ্ছতীতি গন্মা। অত্র ঘোর্মন ইতি মস্য ন ॥ ১০৩২ ॥

হব ইতি শেষবকারান্ত প্রত্যাহার । তেন ক্রখাক্ ঘৃষ্যাক্ গৃধ্নু ঘৃষ্ণু রক্ষঃ অন্ন ইত্যাদৌ ইম্ ন স্যাৎ। ন চ হ্রকারাদের্ঝভাদেশ প্রত্যয়স্য অসম্ভবে জকারাদে সম্ভবেঽপি তস্য ইম. অসম্ভবে বম ইত্যনেনাপীষ্টসিদ্ধৌ ইতি বাচ্যম্। তথোক্তৌ

वम प्रत्याहारस्य अप्रसिद्धतया वकारमकारयोरेव ग्रहणमिति असमापत्ते । सुश्रृणातीति सुशर्म्मा अनेन इम् निषेध । क्वनिपमाह। सुष्ठु पिवतीति सुपीवा अत्र क्वनिप इकार उच्चारणार्थं कित्त्वात् गुणे दामाग इति ङी। प्रातर्व्वेति प्रातरित्वा सुनोतीति सुत्वा उभयत्र कित्त्वात् गुणाभावे पित्त्वात् त्वस्य तन्. कर्म्मपूर्व्वकदृशो ऽतीति क्वनिप्। मेरु दृष्टवान् मेरुदृश्वा एव बहुदृश्वा। राजसहाभ्या युधोऽप्यतीति। राजयुद्धा सहयुध्वा एव राजान कृतवान् राजकृत्वा। वनिपमाह। भूरि ददातीति भूरिदावा। वारिणि जायते वारिजावा उभयत्र विड्वनोरिति ङा। एव यजते स यज्वा अत्र क्वनिगदिमदीत्यत्र इतुकरणज्ञापकात् नङा आदेश। विचमाह। सोम पिवतीति सोमपा अत्र विच इकार उच्चारणार्थ चकारस्तु प्राचीन् मतानुवादार्थो नत्वव्ययार्थ । व्यौ वमाव इति वस्य लोप । रेषति रोषतीति रेट् रोट् विचि गुण। क्रुन्चु गत्या विचि क्रुड् अस्मात् क्विप् न स्यादनभिधानात्। क्विपमाह। अस्य इकार उच्चारणार्थ क्विपःकित्त्वात् गुणाभावादि । [illegible] तन् व्यौ वमाव इति वस्य लोप । युनक्तीति युङ् अत्र क्विपि नलोपे [illegible] युजिरो ऽसे इति नुण्। प्रत्यञ्चतीति पूजार्थस्य नलोपाभावे प्रत्यङ्। गत्यर्थस्य तु नकार लोपेऽपि त्रिदचोऽदे रिति नुणि प्रत्यङ् अजेर्व्यतीति अचयू क्वौ शूटाविति ऊट। मित्र शास्तीति मित्रशी क्वौ शाशसयेत्युक्ते आकारस्य इकारे शासवसेति षत्वम्। आशासनमाशी इकारे षत्वम्। आशास इति किम्? प्रशा । गृणातीति गी अत्र ऋदिरणाविति इर्। वहतीति वहो घोटकादि । तस्मात् भ्रश्यति वहभ्रट हमुङ [illegible] इति न लोपे भ्रष्जेति षङ्। घृत स्पृशतीति घृतस्पृक् कित्त्वात् न गुण । शस्य मत्तीति शस्यात्। एव क्रव्यात्। दृषद्द् सो प्रगाहिहिताभ्यामाभ्याम नत्व[illegible] भ्याम् असरूपाणा तव्यादीना बाधदर्शनात् कर्म्मपूर्व्वकवार्ता परविहितौ अदद्वरावपि क्विप् विचौ ढात् पश्यति इनचरेत्यादि सुकुट दृश्यते क्वचित् बाध्यते क्वचिदिति कि क्रव्यात् क्रव्याद अत्र क्विप् अण् च। शत्रुह्णा [illegible] [illegible] टक् च। कर्म्मकृत् कर्म्मकर, अत्र क्विप् टश्च। अग्निश्चित सो[illegible]त् सुत्रोऽ[illegible] क्विप् अग्नि चितवान अग्निचित् एव सोमसुत्। सु पुण्य पाप कर्म्म मन्त्र पदभ्य कृञोऽतीते क्विप्। सुष्ठु कृतवान् सुकृत् पापकृत् धर्म्मकृत् मन्त्रकृत् पदकृत। समान [illegible] विचक्विप इति बहुवचन प्रत्ययान्तरप्राप्त्यर्थम्। [illegible] कुत्साया विक्रीणातेरिन्नतो कर्त्तरि। सोम विक्रीतवान् सोमविक्रयी एव शुक्रविक्रयी घृतविक्रयी लवण विक्रयी लौहविक्रयी विप्र ॥१०२२॥

## १०३४ । छादे-स्त्रमन्-क्वीस्-घे स्वः ।

छादे ६।, त्र-मन् क्वि-इस्-घे ७।, स्व. १। ।

छादयतेः स्वः स्यात् त्रे मनि क्वा विसि घे च । छत्रं छद्म तनुच्छत् छदिः उरश्छदः ।

## १०३५ । दद्दज्जुहू वाक् प्राट् श्री स्नू द्रू ज्वायतस्तू कटप्रू परिव्राट् दिद्युज्जगत् दधृक् स्रगुष्णिहः ।

ददृत्—उष्णिह १॥ ।

एते क्विबन्ता निपात्यन्ते । दीर्घ्यतीति ददृत्, जुहोत्यनयेति जुहूः, वक्त्यनयेति वाक्, पृच्छतीति प्राट्, श्रयत्येना श्रीः, स्रवतीति स्रूः द्रवतीति द्रूः जवतीति जूः आयत स्तौति आयतस्तूः कट प्रवते कटप्रूः, परिव्रजतीति परिव्राट्, द्योतते इति दिद्युत्, गच्छतीति जगत्, धृष्णोतीति दधृक्, सृज्यते इति स्रक्, ऊर्द्ध्वं स्निह्यतीति उष्णिक् ।

## १०३६ । जिर्घोऽन्त्यः ।

जि' १।, घं १।, अन्त्य १। ।

अन्त्यो जिर्घः स्यात् । मित्रं ह्वयतीति मित्रह्वः ।

---

छदकिञ संवृती छाद्यतेऽनेनेति छत्रम् अत्र ष्ट्रनतेरितीम् निषिद्धे जेर्लोपेऽनेन ह्रस्वे झपझसीरिति दस्य तः । छद्म इति मनि ह्रस्व तनु छादयतीति तनुच्छत् अत्र क्विपि ह्रस्व. । छाद्यतेऽनेनेति छदि अत्र इसि ह्रस्व. । घे परे ह्रस्वविधानात् छादयते कर्त्तरि पुंसि संज्ञाया व ण्यर्थे मन्तव्य. । तेन उरश्छादयतीति उरश्छद एव प्रच्छद, दन्तच्छदः छद एषु घे परे ह्रस्व. ॥१०३४॥

षोडश्यैते क्विबन्ता निपात्यन्ते ॥१०३५॥

अन्त्य. अतृप्रत्ययाव्यवहितपूर्ववर्त्ती । मित्रह्वरिति क्विपि ग्रहस्वपाद्योरिति जौ

## १०३७। वे-ध्याप्यां क्वौ।

वे-ध्या आप्या ६॥, क्वौ ७। ।

ऊः धीः आपीः। ध्याप्योः अतएव जिः।

## १०३८। अमुङो झस्यणौ चातिकि।

अमुङ ६।, झसि ७।, अणौ ७।, च ।१।, अतिकि ७। ।

अमन्तस्योङोर्घः स्यात् अणौ झसे क्वौ च, न तु तिकि।
प्रशान्।

## १०३९। स्रिवाव मव ज्वर त्वरो वूडुङा अमे च।

स्रिव अव मव ज्वर त्वर ६।, व् ।१।, ऊट् ।१।, उङा ३।, अमे ७।, च ।१। ।

एषां व उङा सह ऊट् स्यात् क्वौ झसि अणौ अमे च।
स्रूः ऊः मूः जूः तूः।

---

अनेन दीर्घः। एवं हृत हृतवान् हृति हृत्वा। ज्यागि जरायां जीनः टु ओश्वि शून। अन्त्य किम् इष्टि उष्ट पृष्ट ॥१०३६॥

ऐञ वे स्यूतौ वयतीति ऊः क्विप् ग्रहस्वपाद्योरिति जौ पूर्वेण दीर्घे सिद्धे नियमः। तेन अस्य जेः क्वावेव दीर्घो नान्यत्र क्वाविति किम्? उत उति उत्वा ध्यायत्यनया इति धीः। आप्यायते आपीश्च। एतयोः क्वौ जेरसम्भवेऽपि क्वौ दीर्घविधानात् क्वौ जि ततो दीर्घश्च ॥१०३७॥

अम् अमन्तो धातुः। तस्य उङ् अमुङ् तस्य। प्रशाम्यतीति प्रशान् क्विपि उङो दीर्घे धोर्मः न इति मस्य न। एवं कनीञ्जि प्रकान् अणौ झसे तु शान्तः शान्तिः शान्त्वा। झसि किम्? प्रशम्य। अणौ किम्? गन्ता। हति हत हत्वा इत्यादौ तु वनतनेति अम्लोपे अमन्तत्वाभावात् न दीर्घः। अतिकीति किम्? रन्तिः तन्तिरित्यादि ॥१०३८॥

सिव्यु श्रीषे गतौ। सीव्यतीति स्रूः अव रक्षादौ अवतीति ऊः। मव नद्धे मवतीति मूः। एषामौकारादौ धीरियुवचौति उवि स्रुवौ उवौ मुवौ इत्यादि। ञ झर्मः रोगे ज्वरतीति जूः। ञित्वरषमङ संद्रे, त्वरते तूः। अणौ-झसे तु स्यूतः स्यूतिः। ऊतिः मूतिः जूर्त्तिः तूर्त्तिः। अमे तु मनि स्रोमा अवतेर्मान मनीषादित्वात् मनः टिलोपे गुणे ओम् ॥१०३९॥

## ১০৪০। রাচ্ছ্বোর্লোপঃ।

রাৎ ৫।, চ্ছ্বো ৬॥, লোপ ১। ।

রাৎ পরয়োঃ ছকারবকারয়োর্লোপঃ স্যাৎ ক্বৌ ঝস্যণৌ অমে চ। মুর্চ্ছা মূঃ ধুর্বী ধূঃ।

## ১০৪১। আদূটো ব্রিঃ।

আৎ ৫।, ঊট ৬।, ব্রি ১। ।

অবর্ণাৎ পরস্য ঊটো ব্রিঃ স্যাৎ। জনান্ অবতীতি জনৌঃ।

## ১০৪২। যম মন-তন গমোঽন্তলোপঃ ক্বৌ।

যম মন তন গম. ৬।, অন্তলোপ ১।, ক্বৌ ৭। ।

এষাম্ অন্তস্য লোপঃ স্যাৎ ক্বৌ। সযৎ পরিমৎ পরীতৎ সঙ্গৎ।

---

মূর্চ্ছা মোহ সমুচ্ছ্রয়ে ক্বসৌ ক্বিপি অনেন চ্ছলোপেব্যঁনচতয়ীতি দীর্ঘে মূ। অচি তু মুরৌ মুর ইত্যাদৌ ক্বস্বস্থিতি। ধুর্বী হিংসে ক্বসৌ ক্বিপি বলোপে ব্যঁনচতয়ীতি দীর্ঘে ধূ ধুরৌ ধুর। অণৌ ঝসি তু মূর্ত্ত মূর্ত্তি ধূর্ত্ত ধূর্ত্তি। অত্র রেফসান্নিধ্যাৎ বকারো দন্ত্য এব গ্রাহ্য। তেন থর্ব গতৌ নর্ব গতৌ ইত্যাদৌ ন প্রসঙ্গ ॥১০৪০॥

জনানবতীতি জনৌ' অত্র অবর্ণান্তকর্ম্মোপপদস্য ক্বিবন্তধাতুনা সমাসেঽনেন ব্রি। যত্রাদৌ ক্বিপ্ তত্র' সমাসস্তত্র গুণ এব। তেন জনস্য ঊ. জনো তব ঊ' তবো ইতি অসমাসেঽপি গুণ এব। একপদে তু অববিকারে ক্বিপি চ্ছ্বো' শূটাবিতি ঊটি অনেন বৃদ্ধৌ শ্রৌ শ্রাবৌ শ্রাব। ধাবুঞ্ জবে ধৌ ধাবৌ ধাব। ক্বৌ শ্রৌতি.। এব ধৌতি ধৌতা ॥১০৪১॥

সযচ্ছতীতি সযৎ। পরিমন্যতে পরিমৎ। পরিতনোতীতি পরীতৎ। এব সংগচ্ছতে সঙ্গৎ। এষু অম্‌লোপে স্বস্য তন্। পরীতদিতি দীর্ঘবিধানাৎ ক্বিবন্তে ধাতৌ উপসর্গাদে' ক্বচিৎ দীর্ঘ' স্যাদিতি সূচিতম্। তেন তনি রুহি নহি হতি হৃষি ব্যধি রুচি সহাদিষু ক্বিবন্তেষু উপসর্গাকারয়োর্দীর্ঘ ইতি বোধ্যম্। পরিতনোতি পরীতৎ বিরোহতীতি বীরুৎ। উপনহ্যতীতি উপানৎ। উপবর্ত্ততে

## १०४३। स्वि-विष्वग्देवस्य टेरद्र्यञ्चौ क्वौ।

स्वि विष्वच् देवस्य ६।, टे ६।, अद्रि ।१।, अञ्चौ ७।, क्वौ ७।

स्वेर्विष्वचो देवस्य च टेरद्रिः स्यात् क्विबन्तेऽञ्चतौ। सर्वान् अञ्चतीति सर्वद्र्यङ्, विष्वद्र्यङ्, देवद्र्यङ्।

## १०४४। अमुद्र्यङ् अमुमुयङ् अदमुयङ् अदद्र्यङ्।

अमुमञ्चौत्यर्थे एते निपात्यन्ते।

## १०४५। सह सम्तिरः सध्रि-समि तिरि।

सह सम् तिर ६।, सध्रि समि तिरि ।१।

एषां क्रमादेते स्युः क्विबन्तेऽञ्चतौ। सध्र्यङ् सम्यङ् तिर्यङ्।

## १०४६। वीरुहो धङ् क्वौ।

वीरुह ६।, धङ् ।१।, क्वौ ७।

वीरुत्।

## १०४७। त्यदादि भवत् समानान्योरसमानात् दृशः टक्-सक्-क्विपो ढे।

त्यदादि—भवत् समान् ५।, दृश ५।, टक् सक् क्विप १।, ढे ७।

त्यदादेर्भवतः समानादन्यस्माच्चासमानात् दृश एते स्युः ढे।

---

उपाहृत्। प्रवर्षतीति प्रावृट्। मर्म्म विध्यतीति मर्म्मावित् एव मृगावित्। निरोचर्ने नीरुक्। ऋति सहते ऋतीषट् अत्र अम्बष्ठादित्वात् षत्वम् ॥ १०४२ ॥

स्विश्च विष्वक् च देवश्चेति तस्य। विष्वगिति मूर्द्धन्यमध्य चान्तमव्ययं विष्वगञ्चतीति विष्वद्र्यङ् ॥ १०४३ ॥

सुगमम् ॥ १०४४ ॥

सह अञ्चतीति सध्र्यङ्। समञ्चतीति सम्यङ्। तिरोऽञ्चतीति तिर्यङ् ॥ १०४५ ॥

विपूर्वस्य रुहो धङ् स्यात् क्वौ। वेर्दीर्घस्य वीज यममनेन्दव लिखितम् ॥ १०४६ ॥

त्यद् आदिर्यस्य स त्यदादिः। त्यदादिश्च भवाश्च समानश्च अन्यश्चेति। त्यदादि-

## १०४८। से र्ङी।

से ६।, ङ्ग ।१। ।

से ङ्गी स्यात् टगाद्यन्ते दृशि। स इव दृश्यते तादृशः तादृक्षः तादृक्, भवादृशः।

## १०४९। समानेदं किमदः सेक्यमू।

समान इदम् किम्-अद ।६॥, स-ई की अमू ।१॥ ।

एषां स्थाने स ई की अमू एते क्रमात् स्युः टगाद्यन्ते दृशि। सदृशः ईदृशः कीदृशः अमूदृशः अन्यादृशः।

इति त्वनादिपादः।

---

भवत्समानान्य तच्च तत् उपमानञ्चेति त्यदादिसमानान्योपमान तस्मात्। उपमानभूतेभ्य एभ्य परात् दृश' एते स्युर्टे ॥ १०४७ ॥

ङित्वादन्त्यस्य स्थाने। स इव दृश्यते इति टकि कित्वात् गुणाभावे तादृश' टित्वादीपि तादृशी। एव सकि कित्वात् गुणाभावे शक्लाजेति षङि षढो क सं इति षस्य कत्वे चूङ् क्रुङिति शस्य कत्वे वा तादृक्ष। स्त्रियान्तु तादृक्षा। एवञ्च क्विपि कित्वात् गुणाभावे तादृक् एव यादृश एतादृश. त्वमिव दृश्यते त्वादृशः अहमिव दृश्यते मादृश आवामिव दृश्येते अस्मादृशौ वयमिव दृश्यन्ते अस्मादृशा। त्वमिव दृश्यते त्वादृश युवामिव दृश्येते युष्मादृशौ यूयमिव दृश्यन्ते युष्मादृशा। मुख्ययोर्युष्मदो. साचात् द्विवचनाभावे युवावौ न स्यातामिति पूर्वं लिखितम्। एवं भवानिव दृश्यते भवादृश ॥ १०४८ ॥

समानश्च इदम् च किम् च अदस् चेति। सश्च ईश्च कोश्च अमूश्चेति। समान इव दृश्यते सदृश अयमिव दृश्यते ईदृश क इव दृश्यते कीदृश. असाविव दृश्यते अमूदृश। अन्य इव दृश्यते अन्यादृश ॥ १०४९ ॥

इति त्वनादिपाद.।

## तृतीयः पादः—क्तादिः।

---

### १०५० । क्त-क्तवतू भूते ढभावे घे।

क्त क्तवतू १॥, भूते ७।, ढभावे ७।, घे ७। ।

धोरतीतेऽर्थे ढभावे क्तो घे क्तवतु' स्यात्, उकावितौ।
स्तुतस्त्वया विष्णुः, स्नातं मया, विष्णुर्विश्वं कृतवान्।

### १०५१ । चे घोंऽढे भावदैन्याक्रोशे तु वा।

चे ६।, घं १।, अढे ७।, भावदैन्याक्रोशे ७।, तु ।१।, वा ।१। ।

चे घंः न तु ढे, भावदैन्याक्रोशे तु वा, तयोः परयो'।

### १०५२ । सूल्वाद्योदिद्रचौ-यल् स्यातो न तोऽपृमूर्च्छंख्याध्यामदो दश्च।

सू लू-आदि ओत्-इत् र-चौ-यल्-स्य आत' ५।, न ।१।, त ६।, अपृ-मद ५।, द ६।, च ।१। ।

स्वादेर्ल्वादेरोकारितो दान्तात् रेफात् चौशब्दात् यलस्य युक्ताकारान्तात् परयोस्तयोस्तस्य नः स्यात, पूर्वस्य च दस्य नः, न तु प्रादिभ्यः। क्षीणः क्षीणवान्। अढे किम्? क्षितः कामो मया।

ष्टुञ स्तुतौ कर्म्मणि क्त वेम सहेति वेमत्वेऽपि वृद्‌ु श्रीति इमौ निषधे कित्वात् गुणाभावे स्तुत। ष्णाल शौचने भावे क्त ष्णात क्त अ द ड कर्त्तरि क्तवतु कित्वात् गुणाभावे उदित्वात् ऋदच इति नुषि अलसौधीरिति दीर्घे कृतवान्॥ १०५०॥

अविशेषात् चिनग हिंसाया चि चतैश्वर्य्ययोः चिञ वासगत्यो इति त्रयाणां ग्रहणम्॥ १०५१॥

सूञ लूञ सूलौ तौ आदी ययोस्तौ सूलादौ। ओत् इत् यस्य स ओदित्

## ১০৫৩ । বৄদুশ্বিজূর্ণৌ ক্তিতো নেম্‌ ।

বৄ ঋৄ উ শ্বিজ্-ঊর্ণৌ ৫।, ক্তিত ৬।, ন ।১।, ইম্‌ ।১। ।

**বৃঞো বৃঙ ঋদন্তাৎ উবর্ণান্তাৎ শ্বিজ ঊর্ণোশ্চ ক্তিত্ ইম্‌ ন স্যাৎ। সূনঃ সূনবান্‌ দীনঃ লূনঃ জীনঃ রুগ্ণঃ ভুগ্নঃ প্রহীণঃ, ভিন্নঃ নির্বিণ্ণঃ, প্যানঃ গ্লানঃ ঘ্রাণঃ। প্রাদেস্তু—পূর্ত্ত মূর্ত্তঃ খ্যাতঃ ধ্যাতঃ মত্ত। বৃত ভূত শ্বিতঃ ঘৃতঃ ঊর্ণুতঃ।**

বলৌ যলান্ত স চাসৌ স্বশ্চেতি যলস্ব তেন যুক্ত আৎ যলস্বাৎ। তত সূল্‌ দ্বী চ ওদিচ্চ দ চ র শ্চ ক্ষীশ্চ যলস্বাচ্চেতি তস্মাৎ। পৃশ্চ মূর্চ্ছশ্চ খ্যাশ্চ ধ্যাশ্চ মদ চেতি। ন পৃমূর্চ্ছখ্যাধ্যামদ চেতি তস্মাৎ। ক্ষীণ ইতি অকর্ম্মকাৎ বক্ষ্যমাণেন কর্ত্তরি ক্তে পূর্ব্বেণ দীর্ঘঽনেন তস্য নকারে ষ্‌ু ণ ইতি ণত্বম্‌ এব ক্ষীণবান্‌। অষ্ঠে ইতি কিম্‌ ? ক্ষিত কামো ময়া হিংসিত ইত্যর্থ। ক্ষীশব্দোপাদানাৎ ক্ষীঞ হিংসি ইত্যস্মাদপি ক্ষীণ। ভাবাদৌ স্বয়মুদাহরিষ্যতি ॥ ১০৫২ ॥

বৄশ্চ ঋশ্চ উশ্চ শ্বিজ চ ঊর্ণুশ্চেতি তস্মাৎ। বৄন্তৌ স্যাদ্বৃদ্বৃরিতি বেমত্বে শ্রেয়তে ভস্‌জ শ্বি স্বৃ ইতি বেমত্বে নেম্‌ ডীদ্বীত্যাদিনা ক্তক্তবতো। রিম্‌ নিষেধে সিদ্ধে হ্ববতেরিত্যাদিনা ক্ত্যাদীনাঞ্চ ইম্‌ নিষেধে সিদ্ধে এষা বয়াণামিহোপাদানং ক্তাচ ইম্‌ নিষেধার্থমেব। তেন বৃত্বা তীর্ত্বা শ্বিত্বা ইতি। এব উবর্ণান্তত্বেনৈব প্রাপ্তৌ ঊর্ণৌ পৃথক্‌ গ্রহণম্‌ কথমিতি চেৎ সত্যম। ভস্‌জশ্বিস্বৃ ইত্যত্র ঊর্ণোর্ব্বেমত্বে নেম্‌ ডীশ্বীত্যনেন বেমধাতুভ্য ক্তক্তবতো রিম্‌ নিষেধে তত্রৈব অনৈকান্তী বর্জনাৎ ঊর্ণো রিম প্রসক্তৌ পুনর্নিষধার্থমিহোপাদানম্‌। স্বাদিমাহ। সূন ইতি সুঘৌড সূতৌ কর্ম্মণি ক্ত. অনেন ইম্‌ নিষেধে পূর্ব্বেণ তস্য ন। এবং সূনবান্‌। ওদীঙয ক্ষয়ে দীন। ল্বাদিমাহ। লূঞগি ছিদি লূন। জ্যাগি জরায়াম্‌ অত বক্ষ্যমাণেন কর্ত্তরি ক্তে গ্রহস্বপাদ্যোরিতি জৌ জীর্ঘোঽন্ত্য ইতি দীর্ঘে জীন.। ওদিতমাহ। ভুজো গৌ বক্রণে ভুগ্ন অন্তরঙ্গত্বান্নিরবকাশত্বাচ্চ আদৌ চুড্‌ক্রুড়িতি জস্য গকারে পশ্চাৎ তস্য ন.। ওহাঙ্‌ত্যাগে প্রহীণ অত্র দামা গৈ ইতি ডী নীচোঽন্তরেতি ণত্বম্‌। দান্তমাহ। ইমিদা স্নেহনে মিন্ন। আদিত ইতি বক্ষ্যমাণাদিম্‌ নিষেধে পূর্ব্বেণ তস্য ন। নির্ব্বিণ্ণ ইতি বিদৌড ভাবে পূর্ব্বাপরহায়ণাদিত্বাৎ ণত্বম্‌। নির্ব্বিণ্ণোঽধ্যয়নে জড ইত্যর্থ। রান্তস্য তু গুর্ডীগ্নি উদ্যমে গূর্ণ। চুর্ডৈশী দহিচূর্ণ ইত্যাদি জ্ঞেয়ম্‌। এষু নেম্‌ডীশ্বীত্যনেন ইমো নিষেধঃ। যলস্বাত-

## १०५४। दिव्यञ्च श्योऽजिगीषाजास्पर्शे न तन्तयोः।

दिवि अञ्च श्य ५।, अजिगीषा-अज अस्पर्शे ७, न ।१।, त ६।, तयो' ६॥ ।

**दिवेरजिगीषायामञ्चते' अजे श्यायतेः अस्पर्शे तयास्तस्य नः स्यात्। आद्यूनः समक्तः।**

## १०५५। घन स्पर्शे श्यो जिः।

घन स्पर्शे ७।, श्य ६।, जि १।।

**घने स्पर्शे चार्थे श्यो जिः स्यात् तयोः। शीन घृतम्।**

---

माह ग्लै म्लै ग्लान आल खेदे आण। एव द्वौ न्यक्करणे ध्यान। यलन्यात इति धातोरेव न तु उपसर्गस्य। तेन निर्यात निर्वात इत्यादौ न प्रसङ्ग। अत्र मूर्च्छवर्जनात् येन केनापि प्रकारेण यो रान्तस्तस्मादपि तयोस्तस्य न स्यादिति सूचितम्। तेन राच्छोर्लोप इति छवयोर्लोपे खुर्छ स्फुर्छा तु विस्मृतौ। स्फादित इति इमो निषेधे स्फूर्ण स्फूर्ण। धुर्व दुर्वी वधे नेम् डीश्वीति इमो निषेधे धूर्ण दूर्ण इति एव कृश विक्षेपे तृतरेऽभिभवे इत्यादीना इरि कृते कीर्ण तीर्ण इत्यादि अत्र धूर्वी हिंस इत्यस्य तु वकारलोपेऽपि कितवे वाच्ये मनीषादित्वात् तस्य नो न स्यात्। तेन धूर्त' कितव। अन्यत्र धूर्णो मृग सिंहेन हत इत्यर्थ। प्रादेस्तु। जिपृ गिलि तु पालने। अस्य स्फादित्वात् प्राप्तौ निषेधे पूर्त्त मूर्च्छा मोह उच्छ्राये आदित इति इमो निषेधे राच्छोरिति छलोपे मूर्त्त। ख्यात ध्यात इति यस्य युक्ताकारान्ततया प्राप्तौ निषेधः। मत्त इति मदीभिर्मङ्कि हर्षे दान्तत्वात् प्राप्तौ निषेध वृदृश्रि इत्यस्य उदाहरणमाह। छत इति छनगञ्ज छङ वर्तौ छञ् ण सम्भक्तौ इति वयाणाम्॥१०५३॥

दिविश्च अञ्चश्च श्याश्चेति तत् तस्मात्। न जिगीषा अजिगीषा। जम् अपादान न जम् अजम् न स्पर्शोऽस्पर्श। अजिगीषा च अजश्च अस्पर्शश्चेति तस्मिन्। एषु नञ्समास स्पष्टार्थ। आद्यून इति आङ्पूर्वात् दिव्यु जिगीषादौ अकर्मकत्वात् कर्त्तरि क्ते नेम् डीश्वीति इमो निषेधे ऊठ् शूटाविति ऊटि अनेन तस्य न। समक्त इति अन्चु गतिपूजनयो कर्म्मणि क्ते नेम् डीश्वीति इमो निषेधे इसुङ न इति नलोपे चुडिति कुङि अनेन तस्य अनेन तस्य न ॥ १०५४ ॥

घने द्रवद्रव्यस्य घनीभावे इत्यर्थ। शीनमिति श्यैङ गतौ क्ते अनेन जौ

जिगीषादौ तु द्यूतम् । उदक्तमुदकं कूपात् । शीतं जलम् । घनस्पर्शे किम् ? सश्यानो वृश्चिकः शीतात् सङ्कुचित इत्यर्थः ।

## १०५६ । प्रतेः ।

प्रते ५।।

प्रतिपूर्वस्य श्यो जिः स्यात् तयोः । प्रतिशीनः ।

## १०५७ । अभ्यवात् वा ।

अभि अवात् ५।, वा ।१। ।

अभ्यवात् परस्य श्यो जिः स्यात् वा तयोः । अभिशीनः अभिश्यानः, अवशीनः अवश्यानः ।

## १०५८ । षिञो ढघे न तो ग्रासे ।

षिञ ५।, ढघे ७, न ।१।, त ६।, ग्रासे ७ ।

षिञः परस्य तयोस्तस्य नः स्यात् ढघे, ग्रासे वाच्ये । सिनो ग्रासः स्वयमेव ।

## १०५९ । पूञो नाशे ।

पूञ ५।, नाशे ७। ।

पूनो नष्टः । अन्यत्र पूतः पवितः ।

---

जीर्णोऽन्य पूर्वेण तस्य न । पूर्वस्य प्रत्युदाहरणमाह । द्यूतमिति भावे क्त जिगीषाया तस्य नो न स्यात् । उदक्तमिति उद्धृतमित्यर्थः । अत्र कूपादिति अपादानप्रयोगात् तस्य नो न स्यात् । शीतमिति स्पर्शार्थे जि. स्यात् तस्य नो न स्यात् । सश्यान इति घनस्पर्शाभावे जिर्न स्यात् तस्य तु नकारः स्यात् ॥१०५५॥

पृथग्योगात् घनस्पर्शयोर्नानुवृत्तिः ॥ १०५६ ॥

सुगमम् ॥ १०५७ ॥

षिनमञ बन्धे इत्यस्मात् कर्म्मकर्त्तरि क्तस्य तस्य नकारः स्यात् ग्रासे वाच्ये । ग्रास. कवल । सिनो ग्रास स्वयमेव बद्ध इत्यर्थः । ग्रासे किम् ? सितश्चौरः स्वयमेव । वाद्वयमध्यवर्त्तित्वादेतदादीनां चतुर्णां नित्यता ॥ १०५८ ॥

पूञ शोधे इत्यस्य अनेकार्थत्वात् नाशार्थे तयोस्तस्य नकार. स्यात् ॥ १०५९ ॥

### ১০৯০। দুগ্বোঃ ঘঁশ্চ।

দুগ্বী ৬॥, ঘঁ. ১।, চ।১।।

**আভ্যা তয়োস্তস্য নঃ স্যাৎ তয়োর্ঘঁশ্চ। দূনঃ গূনঃ।**

### ১০৯১। ব্রশ্চেঃ কঙ্ চ।

ব্রশ্চে ৬।, কঙ্।১।, চ।১।।

**ব্রশ্চেস্তয়োস্তস্য নঃ স্যাৎ কঙ্ চ। বৃক্ণঃ।**

### ১০৯২। ক্ষীঘ্রাত্রোন্দনুদবিন্দো বা।

ক্ষী—বিন্দ ৫।, বা।১।।

**এভ্যস্তয়োস্তস্য নঃ স্যাৎ বা। ক্ষীণঃ ক্ষীতঃ, ঘ্রাণঃ ঘ্রাতঃ, ত্রাণঃ ত্রাতঃ, উন্নঃ উত্তঃ, নুন্নঃ নুত্তঃ, বিন্নঃ বিত্তঃ।**

### ১০৯৩। ক্ষৈ-শুষ্-পচো মকবঃ।

ক্ষৈ শুষ্ পচ ৫।, ম ক-ব ১।।

**এভ্যস্তয়োস্তস্য মকব এতে ক্রমাৎ স্যুঃ। ক্ষামঃ শুষ্কঃ পক্বঃ।**

---

দুদ্বীঽনুতাপে গুশ্বি তু বিষ্ঠোৎসর্গে ইত্যেতাভ্যা তয়োস্তস্য ন স্যাৎ তয়োর্দীর্ঘশ্চ ওদূঙশ খেদে গুশ্বি তু বিট্সর্জ্জৌ ইতি দীর্ঘান্তাভ্যাম্ এবেষ্টসিদ্ধৌ এতদ্বিধানং হ্রস্বান্তয়ো দুগ্বী প্রয়োগনিষেধার্থম্ ॥১০৯০॥

ন চ চঙ্ ঙিত্যনেনৈবেষ্টসিদ্ধৌ ইহ কঙ্বিধানং ব্যর্থেতি বাচ্যম্। প্রকৃতিজনি-বিশেষবিধানাৎ ষঙ প্রাবল্যত্বাৎ। বৃক্ণ ইতি ব্রশ্চূ শ ছেদে কর্ম্মণি ক্ত নেম্ ডীশ্বীতি ইমো নিষেধে গ্রহস্বপাদ্যোরিতি ঞৌ অনেন তস্য নত্বে চস্য চ কঙি নৈমিত্তিকস্যাপ্যভাব ইতি ন্যায়াৎ তালব্যশস্য দন্ত্যত্বে স্বাদে সৌ লোপ ॥১০৯১॥

ক্ষীণ ইতি ক্ষীঞি ক্ষয়ে কর্ত্তরি ক্তে অনেন তস্য ন পক্ষে ক্ষীত। ঘ্রা গন্ধগ্রহণে কর্ম্মণি ক্ত ঘ্রাণ, ঘ্রাত। ত্রৈঙ পালনে কর্ম্মণি ক্ত ত্রাণ, ত্রাত। উন্দী ক্লেদে কর্ত্তরি ক্ত নেম্ ডীশ্বীতি ইমো নিষেধে হসুঙ্ন ইতি নলোপে উন্ন উত্ত। কর্ম্মণি ক্ত নুন্নঃ নুত্ত। ধৌ বিদঙ মীমাংসে কর্ম্মণি ক্ত বিন্ন, বিত্ত। সঞ্জায়ান্তু বিত্রাত ইত্যেব বাশব্দস্য ব্যবস্থাবাচিত্বাৎ ॥১০৯২॥

ক্ষৈ ক্ষয়ে ক্ষাম, শুষ্যৌচ্ শোষে শুষ্ক। উভয়ত্র অকর্ম্মকত্বাৎ কর্ত্তরি ক্ত।

## १०६४ । प्रस्त्योम वा जिश्च ।

प्र स्त्य ५।, म ।१।, वा ।१।, जि १।, च ।१। ।

प्रस्त्यस्तयोस्तस्य मः स्यात् वा जिश्च । प्रस्तीमः प्रस्तीतः । प्रात् किं, संस्त्यानः ।

## १०६५ । निर्वाण भित्तर्ण वित्त फुल्लोत्फुल्ल सम्फुल्ल प्रफुल्ल चीव कृश परिकृशोल्लाघाः ।

निर्वाण—उल्लाघा १।॥ ।

एते क्तान्ता निपात्यन्ते । निर्वाणः शान्तः निर्वाण मुक्तिः, भित्त खण्डम् ऋण विशोध्य, वित्त धन वित्तः प्रतीतः । फुल्लो विकसितः उत्फुल्लः सम्फुल्ल प्रफुल्लश्च । चीवो मत्तः, कृशस्तनुः परिकृश ।, उल्लाघो नीरुजः ।

डुञ्चीष प्रच पाके कर्मणि क्ते अन्तरङ्गत्वात् निरवकाशत्वाच्च आदौ चृङ् क्तिति कुडि पश्चादनेन तकारस्य व पक्व ॥१०६३॥

अत्र वाशब्दस्य मकारेणैव सम्बन्धत्वात् जिर्नित्य. । स्त्यै सहती ध्वनौ कर्त्तरि क्ते प्रस्तीम प्रस्तीत । प्रात् किम् ? स्त्यान संस्त्यान ॥१०६४॥

वा ल मसन हसयो निर्वाण शान्त निर्वाण मुक्ति उभयत्र नोऽचोऽन्तरेति णत्वम् । अन्यत्र निर्वात । जधौ भिदिर भित्त खण्डम् अन्यत्र भिन्नम् । ऋणदुञ गतौ ऋण विशोध्यम् अन्यत्र ऋतम् । विदल्मतौ वित्त धन वित्त प्रतीत अन्यत्र विदित । फुल्ल विकसने इणोऽभावे लकारस्य लोपेऽकारस्य पूर्वेण योगे फुल्लादि चतुष्टयम् । केवलस्य उत्सम्प्रपूर्वस्य च निपातनादन्यत्र सुफुल्लित इत्यादि । जौमरास्तु ञिफलाभिदीत्यस्यैव फुलादेश तकारस्य च लकारं कृत्वा फुल्लादि चतुष्टय साधयन्ति । तन्मते फुल्लविकसने इत्यस्य फुल्लित इति स्यादेवेति विरोध । स्वमते तु फलनिष्पत्तौ फलज गतौ इति द्वयोः सेमो फलित फलितवान् इति । ञिफलाभिदीत्यस्य आदित इति इणो निषेधे चर्फलोदुरिति अकारस्य उकारे प्रफुल्त इति बोपदेवलिखनात् फुल्लो विकसित इति व्याख्यानाच्च फुल्ल विकसने

## १०६६। क्षुधवसपूजार्थाञ्चागार्ध्यार्थलुभः क्त्वश्चेम्।

क्षुध—लुभः ५।, क्त ६।, च ।१।, इम् ।१।।

एभ्यः परयोस्तयोः क्त्वश्च इम् स्यात्। क्षुधितः उषितः अञ्चितः लुभितः। गतौ तु। अक्तः। गार्ध्यार्थे तु लुब्ध ।

## १०६७। पू क्लिश वम जप व्याप्त्वसस्तयोर्वा।

पू—व्याप्त्वस ५।, तयो ६॥, वा ।१।।

एभ्यस्तयोः इम् स्यात् वा।

## १०६८। पू श्री धृष मिद च्विद स्विद क्षमार्थम्तृषां सेमोर्गुः।

पू—म्तृषा ६॥, सेमो ७॥, गु १।।

एषां गुः स्यात् तयोः सेमोः। पवितः, पूतः, क्लिशितः

इत्यस्यैव निपातनं प्रतीम। चीरङ् दर्पे चीवो मत्त। सोपसर्गस्य तु प्रचीवितः। क्लशियंत्तः कार्श्ये। क्षामस्तनु एव परिक्षाम। अन्यत्र परिक्लशितः। लाघृङ् शक्तौ। उल्लाघो रोगान्मुक्तः, केवलस्य उदो ग्रहणात् प्रोल्लाघितः मलाघितः शक्तः इत्यादौ न निपातः॥ १०६५॥

गार्ध्यं लिप्सा। गार्ध्यमर्थो यस्य स गार्ध्यार्थः न गार्ध्यार्थः अगार्ध्यार्थः स चासौ लुभ चेति अगार्ध्यार्थलुभः ततः क्षुधवसेत्यादि द्वन्द्वः तस्मात्। क्षुध वसौ औदित्वात् पूजार्थाञ्चोरुदित्वेन क्त्वाचो वेमत्वे अगार्ध्यार्थलुभश्च वेस् सहेत्यादिना वेमत्वे नेम् डीश्वीति निषेधादप्राप्तौ विधिरयम्। क्षुधित इत्यादि सुगमम्। लुभित इति लुभ विमोहने। गार्ध्ये तु लुभ्य गार्ध्ये क्त। नेम् डीश्वीति इमो निषेधे ढधात्तयोरिति तस्य धे झप्झसीति भस्य ब। क्त्वाचस्तु क्षुधित्वा उषित्वा अञ्चित्वा, लुभस्तु अनेन इमि व्युञ्जोमो हसादेरिति कित्त्वविकल्पे लुभित्वा लोभित्वा॥१०६६॥

पूङ् पूञो वृदुम्रीत्यादिना निषेधात क्लिश्श् उपतापे क्लिशूगतु विबाधे इत्यनयोर्वेमतया नेम् डीश्वीत्यनेन निषेधादप्राप्तौ वमादीनां नित्यप्राप्तौ विभाषेयम्॥ १०६७॥

क्षमार्थश्चासौ मृष चेति क्षमार्थमृष। ततः पूश्च शीश्च धृषश्च मिदश्च च्विदश्च

क्लिष्टः, वमितः वान्तः, जपितः जप्तः, विश्वसितः विश्वस्तः, आश्वसितः आश्वस्तः । ग्रथितं धर्षितं मेदितं च्वेदितं स्वेदितं मर्षितम् । च्चमार्थः किम् ? अपमृषितं वाक्यम् ।

## १०६९ । भावादिढ़े वोदुङोऽब्वतः ।

भाव आदिढ ७, वा ।१, उत् उङ ६, अप्वत ६ । ।

विहिताप उदुङो भावादिढयोर्णुर्वा स्यात् तयोः सेमोः । द्योतितं द्युतितं तेन । अनपस्तु क्षुधितम् ।

## १०७० । लोपो ञेः ।

लोप ११, ञि ६ । ।

ञेर्लोपः स्यात् तयोः सेमोः । भावितः भावितवान् ।

---

क्लिदस्य क्षमार्थस्य च तेषाम् । सह इमा वर्त्तेते यौ तौ सेमौ तयोः । पवित इति एवेण इमि अनेन गुणः । ञिधृषान् प्रागल्भ्ये भावे क्ते भावादिढे वेति इम् पक्षे ऽनेन गुणे धर्षितमिति । एवम् ञिमिदा स्नेहने ञिच्चिदञि मोचे एषामपि साध्यम् । मर्षितमिति मृष्यञ् क्षान्तौ वसोऽरस्येति इमि अनेन गुणः । अन्यत्र अपमृषितं निन्दितं वाक्यमित्यर्थः ॥१०६८॥

आदिढ क्रियारम्भः । अप्शब्दो विधाने उपचारात् । अप् अल्पस्य अब्वान् तस्य । इत्यत आह विहिताप इति । विहितः कृतोऽप् यस्मात् स विहिताप् तस्य । भ्वादेरदादेश्चेत्यर्थः । अदादेः शपोऽस्थायित्वेऽपि तद्विधानमेतदर्थम् । भ्वादेस्तु द्युत्लङ् द्युत्या भावे क्ते वसोऽरस्येति इमि अनेन वा गुणे द्योतितं द्युतितं तेन । एवं शुभल्ङ शोभितं शुभितम् । अदादेस्तु लघिर रुद रोदे रोदितं रुदितम् । तुरलिर्वेगे तोरितं तुरितम् । आदिढे तु घे चादिढे इति वक्ष्य-माणात् कर्त्तरि क्ते प्रद्योतितः प्रद्युतितः स इत्यादि बोध्यम् । भ्वाद्यदादिभ्यामन्यस्य तु । क्षुधयौ क्षुधि क्षुधितं प्रक्षुधितः सः । एवं कुषश्च उपकरणे कुषितः प्रकुषितः सः । भावादिढयोः किम् ? अकर्म्मकत्वात् कर्त्तरि क्ते द्युतितः । सेमोः किम् ? गुप्तः द्रुग्धम् । भावादिढयोः क्तवतोरसम्भवेऽपि तयोरित्यस्यानुवर्त्तनं परेषु सार्थकम् ॥१०६९॥

भावित इति ञेर्लोपे त्यलोपे त्यलक्षणमिति न्यायात् वृद्धिः । एवं ञिमुदङ्

१०७१। नेमुडीश्वीदिद्वेमोऽपत्यनेकाज्निष्कुषः।

न ।१।, इम् ।१।, डी श्वि ईदित वेम ५।, अ पति-अनेकाच् निष्कुष ५। ।

डोङ श्वयतेः ईकारितो विकल्पितेमश्च पत्यादिवर्जात् तयोः इम् न स्यात्। डीन शूनः दीप्त गूढः स्तः ततः। पत्यादेस्तु पतितः दरिद्रत निष्कुषित ।

१०७२। आदितः।

आदित ५। ।

आकारितस्तयोः इम् न स्यात्। मिन्नः मिन्नवान्।

---

मीदित मीदितवान्। ब्धुडवल वद्धित इत्यादौ गुण। भञ्जो घौ भञ्जित इत्यादौ अगुणनिमित्तको नलोपो न स्यात् ॥१०७०॥

ईत् इत् यस्य स ईदित्। वा इम् येभ्य ते वेम। तत डीश्च श्विश्च ईदिच्च वेमश्चेति तस्मात्। पतिश्च अनेकाच्च निष्कुष् च ते, न विद्यन्ते ते यत्र सोऽपत्य-नेकाज् निष्कुष तस्मात्। डीन इति ओडीङय गतौ अनेन इमो निषेधे ओदि-त्त्वात् तस्य न। अविशेषात् डीङच नभोगतौ इत्यस्मादपि इमो निषेधे डीत इति। शून इति टुं ओश्वि क्ते ग्रहस्वपाद्योरिति जौ जीर्णोऽन्त्य इति दीर्घे ओदित्त्वात् तस्य न। ईदितमाह। दीपीङय् दीपने दीप्त। वेममाह। गुह्ञ सम्वतौ क्त. वेमूदिदित्यनेन वेमत्वादिमो निषेधे ह्रोढोभावित्यादि कार्य्ये गूढ। स्तल ध्वनौ वेमूदिदित्यनेन वेमत्वात् इम् निषेधे स्तत। तनदुञ विस्तृतौ पूक्लि युदित इति वेमत्वात् इम् निषेधे वनतनेति न लोपे तत। एव षहजङ शक्तौ वेमसहेति वेमत्वात् इमो निषेधे सोढ। नृत्य नर्त्ते नृतृक्षत् इत्यादिना वेमत्वात् इमो निषेधे नृत्त। पतित दरिद्रित इत्युभयत्र भस्ज श्रिस्वृ इत्यनेन वेमत्वेऽपि निष्कुषित इत्यत्र वेमूदिदित्यनेन वेमत्वेऽपि पत्यनेकाज् निष्कुषा वर्जनात् इम् स्यात् ॥१०७१॥

आत् इत् यस्य स आदित् तस्मात्। इञ्मिदा स्नेहने अकर्म्मकत्वात् कर्त्तरि क्ते अनेन इम् निषेधे सूत्वाद्योदीति तस्य दस्य च ने मिन्न। एव मिन्न-वान् ॥१०७२॥

**१०७८। दान्त शान्त पूर्ण दस्त स्पष्ट च्छन्न-ज्ञप्ता वा।**

दान्त-ज्ञप्ता १।॥, वा ।१। ।

एते ञ्यन्ता: क्तान्ता निपात्यन्ते वा। पक्षे दमित: शमित: पूरित: दासित: स्पाशित: छादित: ज्ञपित:।

**१०७९। स्फाय: स्फी वा।**

स्फाय' ६।, स्फी ।१।, वा ।१। ।

स्फीत: स्फीतवान्, स्फात: स्फातवान्।

**१०८०। प्यायोऽगे: प्यस्वाङ्गे तु वा।**

प्याय ६।, अगे' ६।, पी ।१।, अस्वाङ्गे ७।, तु ।१।, वा ।१। ।

अगे: प्याय: पी स्यात्, स्वाङ्गात् अन्यत्र तु वा तयो:।

पीन मुखं, प्यान: पीन: स्वेद:।

---

हृष्थु इर तुष्टौ। हृष्ट. हृषित। अस्य क्ताच वेमत्वात् नेम् डीश्वीति निषेधाद्ग्राप्तौ विभाषा। ञित्वरषमङ स्वरे। स्विवावमवेति ऊटि सूत्वायोदिदिति तस्य ने तूर्णं। पक्षे त्वरित'। घुष कि इर्नुतौ वि शब्दे। सङ्घुष्ट सङ्घुषितम्। स्वन ण शब्दे। आस्वान्तम् आस्वनितम्॥ १०७७॥

दमादीनां ञ्यन्तानाम् एते क्तान्ता वा निपात्यन्ते। दनु्यु इशंमे शमुभियंशमे प्रेरणञौ कर्म्मणि क्ते दान्त: शान्त इति। पक्षे घटादीति ह्रस्वे वसोऽरस्येति इमि लोपो ञेरिति ञेर्लोपे दमित शमित इति। पूरी यङ पूर्त्तौ प्रेरणञौ पूर्ण। पक्षे इमि ञेर्लोपे पूरित'। दसु इर् तु उत्क्षेपणे प्रेरणञौ दस्त। पक्षे दासित। स्पशंञ ग्रन्थबाधयो: प्रेरणञौ स्पष्ट:। पक्षे स्पाशित। छद किञ संवृतौ। स्वार्थञौ छन्न:। पक्षे छादित:। ज्ञप क्म तु ज्ञप्तौ स्वार्थञौ ज्ञप्त.। पक्षे ज्ञपित'॥ १०७८॥

स्फायीङ सवृद्धौ ईदित्त्वात् इमो निषेधे स्फीत: स्फीतवान्। पक्षे य्वोर्लोप इति यलोपे स्फात: स्फातवान्॥ १०७९॥

ओ प्यायीङ वृद्धौ क्ते ईदित्वात् इमो निषेधे ओदित्वात् तस्य ने पीन मुखम्।

## १०८१। आङोऽन्धूधसो:।

आङ ५।, अन्धु उधसो: ७॥।

आङ: परस्य प्याय: पी स्यात् तयो:, अन्धूधसो:। आपीनोऽन्धु:, आपीनम् उध:।

## १०८२। ह्लादे: ह्रस्व: क्तौ च।

ह्लादे ६।, ह्रस्व: १।, क्तौ ७।, च ।१।।

ह्लादे: ह्रस्व: स्यात् तयो: क्तौ च। प्रह्लन्न:।

## १०८३। दो-षो-मा-स्थां ङिस्त्यणौ।

दो—स्थां ६॥, ङि १।, ति ७।, अणौ ७।।

एषां ङि: स्यात् अणौ तकारे परे। दित: सित: मित: स्थित:।

## १०८४। छाशोर्वा।

छा शो. ६॥, वा ।१।।

छित: छात: शित: शात:।

---

अगे किम्? प्रप्याय्य मुखम्। य्वोर्लोप इति यलोप.। अस्वाङ्गे तु प्यान पीन स्वेद' ॥१०८०॥

आङ' परस्य प्याय पी स्यात् तयो' परयो अन्धौ उधसि च वाच्ये। अन्धु' कूप उधो गवादे स्तन ॥१०८१॥

ह्लादीङ मोदने कर्त्तरि क्तो ईदित्त्वात् इमो निषेधे अनेन ह्रस्वे दान्तत्वात् तस्य दस्य च ने प्रह्लन्न: ह्लन्नवान् क्तौ ह्लत्ति ॥१०८२॥

दो य छेदे दित। षो य नाशे सित:। मा इति स्वरूपात् मेङ प्रतिदाने माङलि शब्दे माल च माने माङय च माने इत्येतेषा मित:। ष्ठा स्थाने स्थित: एव दितवान् दिति' दित्वा। अणौ किम्? दाता दातु दावमित्यादि ॥१०८३॥

छाशोर्ङि. स्यात् वा अणौ तकारे। छो य लूनौ एचोऽशित्या छित: छात. एवं शो य. निशाने शित: शात: ॥१०८४॥

১০৮৫। শো ব্রতে নিত্যম্।

শ ৬।, ব্রতে ৭।, নিত্যম্ ১।।

সংশিত ব্রতম্।

১০৮৬। ধাঞো হিঃ।

ধাঞ ৬।, হি ১।।

ধাঞো হিঃ স্যাৎ অণৌ তে পরে। হিতঃ।

১০৮৭। চরফলোঽদুঃ।

চর ফল ৬।, অত ।১।, উ ১।।

অনয়োঃ অকার উ স্যাৎ অণৌ তে। চরিত প্রফুল্তঃ।

১০৮৮। দদ্বোঽধঃ।

দত ।১।, দ ৬।, অধ ৬।।

দানার্থকস্য ধাবর্জস্য দত্ স্যাৎ অণৌ তে। দত্তঃ। অধঃ কিম্?, ধীতঃ।

শো য নিশানে ইত্যস্য নিত্য ভি স্যাৎ অণৌ তকারে ব্রতে বাচ্যে। সংশিত ব্রতম্। অব ব্রত বাচ্যে তস্যৈব প্রয়োগ ॥১০৮৫॥

হিত হিতবান্ হিতি হিত্বা হিবিমম্ ॥১০৮৬॥

চর গমনেঽদনে আচারে অস্মাৎ ক্তক্তবত্বো ক্তাচশ্চ বসৌঽরস্যেতি ইমি অব্যবহিততকারাভাবাদুকারাভাবে চরিত চরিতবান্ চরিত্বা। ক্তৌ তু হ্ববরতেরিতি ইমো নিষেধে অনেনাকারস্য উকারে ব্যঞ্জনচতয়ীতি দীর্ঘে চূর্ত্তিরিতি। ঞিফলা ভিদি আদিত ইতি ইমো নিষেধেঽনেনাকারস্য উকারে প্রফুল্ত এব ফুল্তবান্ ফুল্তি ॥১০৮৭॥

দাল লূনৌ, দা তু দানে ডুদাঞ্চি চ দৈঙ পালনে ইতি চতুর্ণা দত্ত এব দত্তবান্ দত্তি, দত্ত্বা। ডুদাঞতি দানে ইত্যস্য তু দত্তিমম্ ইত্যপি। অধ, কিম্? ধেট পানে তৌ দামাগে ত্বাকেতি ঙী ধীত, ইত্যাদি ॥১০৮৮॥

## १०८९ । ग्यचस्त वा ।

गि अच ५।, त ।१।, वा ।१। ।

गेरचः परस्य अधो दासंज्ञकस्य वा तः स्यात् अणौ ते । प्रत्तः प्रदत्तः ।

## १०९० । घौं दा-ते गीचः ।

घं १।, दा ते ७।, गीच ६। ।

नीत्तम् । इचः किम् ? प्रत्तं निर्दत्तम् ।

## १०९१ । जग्धोऽदो यपि च ।

जग्ध १।, अद ६।, यपि ७।, च ।१। ।

अदो जग्ध स्यात् अणौ ते यपि च । जग्धम् ।

## १०९२ । घे चादि-ढे क्तः ।

घे ७।, च ।१।, आदिढे ७।, क्त १। ।

आदिढे विहितः क्तो घे स्यात् ढभावयोश्च । प्रकृतः कटः सः, प्रकृतः कटस्तेन । [१०५१] च्वे घं इति प्रच्चीणः सः

---

प्रत्त प्रत्तवान् प्रत्ति । उदाञ्चलि इत्यस्य तु प्रत्तिमित्यपि । पक्षे प्रदत्त इत्यादि । अध किम् ? धेट पाने प्रधीत । अच किम् ? निर्दत्त ॥१०८९॥

वाद्यमध्यवर्त्तित्वादेतदाद्यष्टाना नित्यत्वम् । गे इचो दीर्घ स्यात् दास्थानजाते तकारे परे । नीत्तमिति पूर्वेण दा स्थाने तकारेऽनेन नेर्दीर्घ एव नीत्तवान नीत्ति परीत्तम् अनुत्तम्, इच. किम् प्रत्तम् ॥१०९०॥

अद्लौ क्त अनेन जग्धादेशे पश्चात् यवादेशेऽपीष्टसिद्धौ यप पृथग् ग्रहण ज्ञाप यति यवादेशादादौ प्रकृते किमपि कार्य्य न स्यादिति । तेन विमुच्य इत्यादौ न कुङ प्रविश्य इत्यादौ न षङ प्रवाह्य इत्यादौ न षङ प्रविह्य इत्यादौ न ढ आपृच्छ्य प्रदीव्य अत्र शकार ऊटौ न स्त । एव क्तौ परे ऊढौ जग्धादेशो न स्यादि त्यपि । तेन अन्न स्विन्नतण्डुले रूढम् । यत्र क्रियापदत्वेन प्रयुज्यते तत्र तु खादेव जग्ध फल तेन खादितमित्यर्थ. ॥१०९१॥

প্রক্ষীণং প্রক্ষিতং তেন, ক্ষীণঃ ক্ষিতোঽয়ং তপস্বী, ক্ষীণায়ুঃ ক্ষিতায়ুঃ শত্রুঃ ।

১০৯৩ । গত্যর্থাঢ়শীস্থাসবসজনজৄশ্লিষরুহঃ ।

গত্যর্থ—রুহ ৫।।

এভ্যো ঘে ক্তঃ স্যাৎ ঢভাবয়োশ্চ । গঙ্গাং গতঃ কৃষ্ণং প্রাপ্তঃ, শয়িতং, শেষমধিশয়িতা বিষ্ণু, বৈকুণ্ঠমধিষ্ঠিতং, শিবমুপাসিতং, হরিদিনমুপোষিতঃ, রামমনুজাতোঽচ্যুতঃ, বিশ্বমনুজীর্ণোঽনন্তঃ লক্ষ্মীমাশ্লিষ্টো মুকুন্দঃ, গরুডমধিরূঢ়ো গোবিন্দঃ ।

---

কর্ম্মশব্দ ক্রিয়াব্যাপ্যবাচী ক্রিয়ামাত্রবাচী চ কর্ম্ম ক্রিয়া তৎ সাতত্যে ইত্যমরাৎ। তেন ক্রিয়াব্যাপ্যকর্ম্মণো ঢসজ্ঞাবিধানেন ক্রিয়ায়া অপি ঢে সজ্ঞাসিদ্ধি । ততশ্চ আদিঢম্‌ আদিক্রিয়া ক্রিয়ারম্ভ ইতি যাবৎ। প্রকৃত কটস, কট কর্ত্তুমারব্ধবান্‌ ইত্যর্থ । প্রকৃত কটস্তেন কট কর্ত্তুমারব্ধ ইত্যর্থ. । অত্র প্রশব্দ আদিকর্ম্মদ্যোতক । কদাচিৎ প্রশব্দাভাবেঽপি আদিকর্ম্ম প্রযোগো দৃশ্যতে । যথা নৃব্রহ্মক্ষত্রবিট্‌শূদ্রৈ সাঙ্গোপাঙ্গৈরিহোদিতা ইত্যমর । ধাতব পঠিতা পাঠ সূত্রলোকাগমস্থিতা ইতি বোপদেবশ্চ । প্রক্ষীণ স ইতি কর্ত্তরি ক্ত ক্ষেঘং ইতি দীর্ঘং সূত্রাদ্যোদিদিতি তস্য নকারে ষ্‌রং র্ণ ইতি ণত্বম্‌ । প্রক্ষীণ প্রক্ষিত তেন । অত্র ভাবে ক্তে দীর্ঘপক্ষে প্রক্ষীণ তদভাবে প্রক্ষিতম্‌। দৈন্যে তু ক্ষীণ ক্ষিতোঽয়ম্‌ তপস্বী । অত্রাকর্ম্মকত্বাৎ কর্ত্তরি ক্ত উপতপ্ত ইত্যর্থ । আক্রোশে তু ক্ষীণায়ু ক্ষিতায়ু শত্রু অত্রাপি কর্ত্তরি ক্ত ॥১০৯২॥

নাস্তি ঢ যেষা তে অঢাঃ। গত্যর্থাশ্চ অঢাশ্চেত্যাদিসমাহারে তস্মাৎ। ঘে চ ক্ত ইতি ত্রয়মনুবর্ত্ততে। গঙ্গাং গত ইতি ঔগমল্ৎ গত্যাং কর্ত্তরি ক্ত বনতনেতি নলোপ । গত্যর্থপ্রাপ্ত্যর্থয়োরৈক্য দর্শয়ন্নাহ। কৃষ্ণ প্রাপ্ত ইতি আপ্‌ৢনৌ ক্তি ব্যাপনে। এব লভ ডু ঙষ প্রাপ্তৌ ধন লব্ধ । পরসূত্রেণৈবেষ্টসিদ্ধেরত্র গত্যর্থগ্রহণং জ্ঞাপয়তি । গত্যর্থপ্রাপ্ত্যর্থয়োরৈক্যাৎ তাভ্যাং কর্ত্তরি ক্ত. স্যাৎ। অধিকরণে তু গত্যর্থাদেব ক্তো ন তু প্রাপ্ত্যর্থাদিতি। শীঙ্‌ লক্ষি স্বপ্নে অকর্ম্মকত্বাৎ কর্ত্তরি ক্ত বসোঽরস্যেতি ইমি পূশী ধৃষেতি গুণে শয়িত । অকর্ম্মকত্বাদেব প্রাপ্তৌ শীস্থাদীনা গ্রহণ সকর্ম্মকত্বেঽপি প্রাপ্ত্যর্থম্‌। তেন অধিকরণস্য কর্ম্মত্বেঽপি শেষ-

## १०९४ । ध्रौव्यगत्यदनार्थात् डे च ।

ध्रौव्य-गति अदनार्थात् ५।, डे ७।, च ।१। ।

**निश्चलार्थात् गत्यर्थात् भोजनार्थाच्च क्तो डे स्यात् ढभावे घे च ।**

**मुकुन्दस्यासितमिदमिदं यातं रमापतेः ।**

**भुक्तमेतदनन्तस्येत्यूचुर्गोप्यो दिदृक्षवः ॥**

---

मधिशयित । शिङा स्थाने अधिकरणस्य कर्मत्वेऽपि कर्त्तरि क्ते दीर्घामास्या-मिति डौ वैकुण्ठमधिष्ठित. । ष्ठिला सङ उपवेशे उदपूर्वत्वेन आराधनार्थत्वात् सकर्मकत्वेऽपि शिवमुपासित । अधिकरणस्य कर्मत्वेऽपि पीठमध्यासित । वसं औ निवासे देशाध्वकालेत्यादिना कालस्य कर्मत्वेऽपि कर्त्तरि क्ते सुधवसिति ड्ग्नि ग्रहस्वपाद्योरिति जौ शासवसेति षत्वे हरिदिनमुपोषित । जनी ङ जनी । जॄङ्ष्यश्च इत्येतयो कर्मासम्भवेऽपि पृथक् ग्रहण ज्ञापयति । अनुपूर्वयोरेतयो प्रयोगे यस्य पश्चात् जनन यस्य पश्चात् जरणञ्च तस्य कर्मत्व स्यादिति । तेन राममनुजातोऽच्युत. अत्र नेमडौश्वीति इमो निषेधे खनसनेति डा । विश्वमनुजीर्णो ऽनन्त । अत्र वृदुग्रीति इमो निषेधे ऋदिरणाविति इरि व्यनचतयोति दीर्घे मूर्च्छाद्योदिदिति तस्य न । श्लिषौ घल्टजि ल षे आलिङ्गनार्थ सकर्मकत्वेऽपि लक्ष्मी-माश्लिष्टो मुकुन्द । षिज रुहौ जन्याम् । आरोहणार्थे सकर्मकत्वेऽपि कर्त्तरि क्ते । औदित्वादिमोऽभावे हाढौभावित्यादिकार्य्ये वृकडमधिरूढ. । एव वृषमारूढ. शिव. ॥१०९३॥

ध्रुवो निश्चलस्तस्य भावो ध्रौव्यम् । मुकुन्दस्येत्यादि मुकुन्द दिदृक्षवो गोप्य इत्यूचु । तत् किमित्याह मुकुन्दस्यद कुञ्जमासितम् । ष्ठिलासङ उपवेशे । उप-वेशनार्थत्वेन निश्चलार्थत्वात् अधिकरणे क्ते आसितम् अत्र इदमित्यधिकरणमुक्तम । रमापतेरिद कुञ्ज यातम् । या ल गतौ अधिकरणे क्त यातम अत्र इदमित्यधि-करणमुक्तम् । अनन्तस्य एतत् तरुतल भुक्त भुजो वौ त्राणे भक्षे अधिकरणे क्ते भुक्तम् अत्र एतदिति अधिकरणमुक्तम् । सर्वत्र क मुकुन्दडेत्यादिना कर्त्तरि षष्ठी । चकारात् ढभावघेषु चेति । कर्म्मणि यथा मुकुन्देन पीठमध्यासितम । मुकुन्देन मथुरा याता मुकुन्देन याज्ञिकान्न भुक्तमति । भावे । मुकुन्देन आसित यात भुक्तमिति, कर्त्तरि तु मुकुन्द पीठे आसित. मथुरा यात याज्ञिकान्न भुक्त इति ॥ १०९४ ॥

## १०९५ । ज्ञार्च्चेच्छार्थञोच्छीलादेः सति ।

ज्ञा अर्च्चा इच्छार्थ ञि इत् शीलादि ५।, सति ७। ।

**एभ्यो वर्त्तमाने क्तः स्यात् तेषु । विदितः, पूजितः वाञ्छितः, इद्धः, शीलितः, शिवोऽनुवर्त्तते ।**

## १०९६ । ठी-प-म-वत् क्वसु कानौ ।

ठी-पम वत् ।१॥, क्वसु कानौ १॥ ।

**धोरेतौ क्रमात् थाः प म-वत् स्तः । बभज्वान्, जजागवान् जजागृवान्, दुध्यूवान्, दिदिवान्, विविश्वान् विविच्छान् ।**

---

ज्ञा ज्ञानम् । ज्ञाश्च अर्च्चा च इच्छा च ज्ञार्च्चेच्छा । ज्ञार्च्चेच्छा अर्था येषां ते ज्ञार्च्चेच्छार्था । ञिरित् यस्य स ञीत । ज्ञार्च्चेच्छार्थाश्च ञीच्च शीलादिश्चेति तस्मात् । पूर्वंतश्चकारोऽनुवर्त्तते । तेन एभ्यो वर्त्तमाने क्त स्यात् चकारात् अतीते च । एतत् तु कालमात्रविधायक, कर्म्मभावकर्त्तृषु तु यथासम्भव स्यादित्यर्थ । विदल मतौ विदित ज्ञायते इत्यर्थं । पूज क पूजे पूजित लोपी ञेरिति ञेर्लोपः । पूज्यते इत्यर्थ. । वाञ्छि कामे वाञ्छित वाञ्छ्यते इत्यर्थ । एषु कर्म्मणि क्त । इन्धीञिधङ युतौ अकर्म्मकत्वात् कर्त्तरि क्त नेम् डीश्वीति इमो निषेधे ह्युङ्क्न इति न लोपे ढभात्तथोरिति तस्य धे भ्रप्भसोरिति धस्य दकारे इद्ध दीप्यते इत्यर्थ. । ञिशील स्यात् समाधौ कर्म्मणि क्त शीलित ध्यायत इत्यर्थ । आदिशब्द ञि रच्च पाजने रचित इत्यादि । स्वमते तु शीलादयोऽपि ञिकारानुबन्धा । शिवोऽनुवर्त्तते इति प्रतिपदेन शिव इति पद योक्तव्यमित्यर्थ न च विशेषविधानादेभ्यो वर्त्तमाने एव क्त । न्तु नत्वतीत इति वाच्यम् अतीते बहुतरप्रयोगदर्शनात् । यथा परस्परेण विज्ञात तेषूपायनपाणिषु । राज्ञा हिमवतः सारो राज्ञ सारो हिमाद्रिणेति रघौ कालिदास । ज्ञातो लङ्केश्वर कृच्छ्रादाञ्जनेयेन तत् ग्रत इति दण्डी । जनैरविदितविभवो भवानीपतिरिति भारवि । स पुण्यकर्म्मा भुवि पूजितो नृपैरित्यादि सुश्रुत न च एष्वपि वर्त्तमाने क्त इति वाच्य वर्त्तमाने क्त कामुकसङ्डेति कर्त्तरि षष्ठ्यापत्ते ॥१०९५॥

ठीपमे इव ठीपमवत् । तेनातीते काले कर्त्तरि वाच्ये परस्मैपदिभ्यः क्वसुः

## १०९७। वसोर्घसेकाजिनात इम् ।

वसोः ६।, घस एकाच् ऋ-इन-आत ५।, इम् ।१।।

**घस एकाचोऽन्तेरिन आदन्ताच्च वसोरिम् स्यात् नान्यतः।**
**जघ्निवान् आदिवान् आरिवान् ईयिवान् ददिवान्।**

---

आत्मनेपदिभ्यः कानः उभयपदिभ्यो इव स्यात्। एवमतीते काले कर्म्मणि सर्वधातुभ्यः भावे त्वकर्म्मकेभ्य कान. स्यात् इत्यर्थ। ठीपमत्वेनैव कित्त्वसिद्धे एतयो पुन कित्करणं स्यात् ठापिदिति विभाषाबाधनार्थं तेन भन्ज धौ मोटने। क्वसौ हवनतेरिति इम् निषेधे हसुङ् इति न लोपे द्वित्वादौ वभञ्ज् इति विङ्गस्य उदित्त्वात् त्रिदच इति नुमि नसम्महन्न इति दीर्वे सयोगान्तलोपे वभज्वान्। एवम् उदित्त्वादौपि वभजुषी। जागृ जागरे क्वसौ जार्गोऽणवृद्धीति गुणविकल्पे जजागृवान्। दिवु जिगीषादौ क्वसौ ङ्कौ शूटाविति ऊठि द्वित्वे दुद्यूवान्। पचे य्वोर्लोप इजि वलोपे दिदिवान्। एव विच्छ गतौ छकारस्य शकारविकल्पे विविश्वान् विविच्छ्वान्॥ १०९६॥

घस च एकाच ऋश्च इन् च आच्चेति तस्मात्। घस. पृथग्ग्रहणात् एकाजिति द्वित्वे कृतेऽपि य एकाच् स एव ग्राह्य। नेमसुमित्यनेन असुम् क्रादिभिन्नधातुभ्य ठाा इट. प्राप्तावपि हवनतेरिति निषेधादप्राप्तौ पुनरिह हसन्तानां मध्ये घसतेर्द्वित्वेऽप्येकाच आदन्तानाम् ऋ इति द्वाभ्याञ्च परस्य वसोरिम् स्यादिति घसादेर्विधौ सुतरामन्यतोऽप्राप्तौ नान्यत इति ज्ञापयति कदाचिदन्यतोऽपि स्यादिति। तेन चवाय साधुः चचिय इत्यादौ कारकविधावव्यकारकात् प्रत्ययो जात। जघ्निवानिति। अदौ क्वसौ व्यां वेति घसादेशे अनेन इमि द्वित्वादिकार्य्ये हनगमेति भापभसोरिति घस कले शासवसेति षत्वम्। पच्चे अदो द्वित्वे दस लोपे सन्धौ एकाचत्वात् इमि आदिवान्। एवम् ईड ईडिवान्। एवञ्च यजः खेर्मूलस्यापि जौ ईजिवान् घस ऊषिवान् इत्यादि। एवञ्च डुपचष पच पाके तृफलेति खेर्लोपे पेचिवान् भन्ज जौ भेजिवानित्यादि। ऋलिंगत्याम् ऋ प्रापे च इति द्वयो. क्वसौ द्वित्वे खेऋकारस्य अले स्यादत्यृत इति गुणे सन्धौ इमि आरिवान्। स्वरूपग्रहणात् ऋर्ते द्विसे इत्यस्य तु स्यादत्यृत इत्यत्र अत्तिग्रहणात् गुणाभावे आदिगेचोरिति गुणे आरिवान्। इन गतौ क्वसौ द्वित्वे खे कितिर्घ इति दीर्घे इमि यिणो इच्यणाविति मूलस्य यकारे ईयिवान्। दारूपात् क्वसौ द्वित्वे इमि आद्योरिति

## १०९८। हन गम दृश विश विन्दो वा।

हन—विन्द. ५।, वा ।१। ।

एभ्यो वसोरिम् स्यात् वा। जघ्निवान् जघन्वान् जग्मिवान् जगन्वान्, दद्दृशिवान् दद्दृश्वान्, विविशिवान् विविश्वान्, विविदिवान् विविद्वान्।

## १०९९। दाश्वान् साह्वान् मीढ्वान्।

दाश्वान् साह्वान् मीढ्वान् ।१॥।

एते वस्वन्ता निपात्यन्ते। चक्राणः, जजागराणः, जजाग्राणः, अनूचानः।

## ११००। क्री-प-म-वत् शतृ-शानौ।

क्री प म-वत् ।१॥, शतृ शानौ १॥।

धोरितौ क्रमात् क्याः प म वत् स्तः। पचन्।

---

आलोपे दिदिवान्। एवं ख्या चख्यिवान् इत्यादि। एभ्य किम्? चिती ज्ञाने चिचित्वान्। इगताविति भौवादिकस्य ईवान्॥ १०९७॥

हनलौ क्वसौ इमि द्वित्वे हनगमेति उङ् लोपे हनो क्रौ इति घ्नादेशे जघ्निवान्। पक्षे खेर्हो घ इति हस्य घे जघन्वान्। औगम्लृ क्वसौ इमि उङ् लोपे जग्मिवान्। पक्षे धोर्म न इति मस्य नकारे जगन्वान्। इरदृशौ क्वसौ इमि दद्दृशिवान् पक्षे दद्दृश्वान्। शौविश क्वसौ इमि विविशिवान् पक्षे विविश्वान्। विद्लृ अपञौ लाभे क्वसौ इमि विविदिवान् पक्षे विविद्वान्॥ १०९८॥

दाश्ङ दाने तालव्यान्त दाश्वान्। दन्त्यान्त इत्येके। सह्यकि शक्तौ साह्वान्। मिहौ सिचि मीढ्वान्। कानमुदाहरति। कृञदङ च उभयपदित्वात् कर्त्तरि काने चक्राणः कुम्भं कुम्भकारः। एवं कर्मणि काने कुम्भकारेण कुम्भश्चक्राणः भावे तु छात्रेण जजाग्राणम्। जागृड्लु जागरे कालस्य कर्म्मत्वात् सकर्म्मकर्मणि काने जागोऽणवृवीति विभाषया गुणे प्राप्ते न मासो जजाग्राणः जजागर इत्यर्थः। अनुपूर्वं ब्रूलञुक्तौ कामे वचादेशे द्वित्वे खेर्मूलस्य च जौ अनूचानः॥१०९

क्री प्रमे इव क्रीपमवत्। एतेन वर्त्तमानकाले कर्त्तरि परस्मैपदिभ्यः शतृ

## ११०१। शानेऽतो मन्।

शाने ७।, अत. ६।, मन् ।१।

अकारस्य मन् स्यात् शाने। पचमानः।

## ११०२। या सोऽस्य।

ई ।१।, आ ।१।, आस ५।, अस्य ६।।

आसः परस्यास्य (शानस्य) आ ई स्यात्। आसीनः।

## ११०३। वेत्तेः शतुः क्वसुर्वा।

वेत्ते ५।, शतु. ६।, क्वसु १।, वा ।१।।

विद' परस्य शतु' क्वसुः स्यात् वा। विद्वान् विदन्।

---

आत्मनेपदिभ्य शान उभयपदिभ्यो द्वय स्यात्। एव वर्त्तमाने कर्म्मणि सकर्म्म-केभ्य भावे त्वकर्म्मकेभ्य शान' स्यात् इत्यर्थे। शित्वाद्रसञ्ज्ञायां शवादौ गच्छन् दीव्यन् सुखन् तुदन् इत्यादि। एव पित्त्वाभावाच्च ङित्वे रुल ध्वनौ रुवन् ष्टुञ्ल स्तुतौ स्तुवन् इत्यादौ गुणाभावे भ्रुभ्वोरित्युव्। एवञ्च ऋलिं गत्यां शतृशानयो शित्वाद्दच्छादेशे इयृच्छत् समियृच्छान.। कातन्त्रास्तु। शतृशानयो. प्रथमान्तेन सामान्याधिकरणाभावे आमन्त्रणे शतृशानौ न स्त। तेन हे पचन् छात्र' हे पचमान छात्र। इति स्यात्। हे पचन्। हे पचमान। इत्यादि न स्यात् इत्याहु : एतयो प्रयोगे क्रियासमाप्तिर्नास्तीति बोध्यम्। पचन्निति डुपचष् पच पाके शत् चे शप् लोपोऽत इत्यकारलोपे ऋदित्त्वात् त्रिदच इति नुमि स्वान्तस्य लुप स्त्रियाम् इपि पचन्ती॥११००॥

पचमान इति कर्त्तरि शान। कर्त्तरि विप्र ओदनं पचमान आस्ते कर्म्मणि विप्रेण पच्यमान ओदनः शोभते। भावे तु विप्रेण दीव्यमानम्॥११०१॥

ई आ इत्युभय लुप्तप्रथमैकम्। आस. परस्य शानस्य आकार ईकार स्यात् इत्यर्थ.। जिलासङ् कर्त्तरि शाने शप् तस्य लुकि अनेन आकारस्य ईकारे आसीन.॥११०२॥

वेत्ते परस्य शतु' क्वसु स्यात् वा। शतृस्थानजातत्वेन विलम् अतीतबोधकत्वञ्च न स्यात्। विदल मतौ शतृ तस्य स्थानेऽनेन क्वसौ विद्वान्। पचे विदन्॥११०३॥

## ১১০৪। শক্তিবয়স্তাচ্ছীল্যে শতুঃ শানঃ।

শক্তি বয়স তাচ্ছীল্যে ৭।, শতু. ৬।, শান: ১।।

শত্রুং নিঘ্নানঃ, কবচং বিভ্রাণঃ, ভোগং ভুঞ্জানঃ।

## ১১০৫। তী-প-ম-বত্ স্যট-স্যমানৌ।

তী-প ম-বত্ ।১॥, স্যট-স্যমানৌ ১॥।

ধোঃ এতৌ ক্রমাত্ ত্যাঃ প ম বত্ স্তঃ। করিষ্যন্ করিষ্যমাণঃ।

ইতি ক্তাদিপাদঃ।

---

এম্বর্থেষু শতু' স্থানে শান. স্যাত্। শত্রুং নিঘ্নান ইতি হনলৌ গতৌ শট শক্ত্যর্থে-ऽনেন শতু. স্থানে শানে শপো লুকি হনগমিত্যুঙ লোপে হনো ক্ণৌ ঘ্ন ইতি ঘ্নাদেশ। কবচ বিভ্রাণ ইতি ভৃঞি টুডু শট যৌবনবয়স্যর্থেऽনেন শতু' স্থানে শানে শপো লুকি হ্রাদীরেদ্বিরিতি দ্বিত্বে খের্ভকারস্য বকারে ঋভাদেরিতি ডৌ ষ্ণু র্ণ ইতি ণত্বম্॥ ভোগ ভুঞ্জান ইতি ভুজপৌ বাধে শট তাচ্ছীল্যে শতুঃ স্থানে শানে রুধাদিত্বা-ন্নমি নপোর্ন্ ইতি নমো নকারে তস্য ঞকার'। ধৃঙ্ঙ স্থিতৌ ইত্যস্য প্রেরণে ঞৌ ধারি। এবম্ অধীঙ্ল অধ্যয়নে ইত্যেতাভ্যামক্রক্রে শট এব স্যাত্ ন তু শান ইতি বক্তব্যম্। ধারয়ন্নুপনিষদম্ অধীয়ন্ তর্কম্। ক্রক্রে তু ধারয়মাণ অধীয়ান' ॥১১০৪॥

তেন ভবিষ্যত্কালে কর্ত্তরি পরস্মৈপদিভ্য. স্যট আত্মনেপদিভ্য স্যমান. উভয়-পদিভ্যো দ্বয় স্যাত্। এব ভবিষ্যত্কালে কর্মণি সকর্ম্মকেভ্যো ভাবে ত্বকর্ম্মকেভ্যঃ স্যমান. স্যাদিত্যর্থ. ॥১১০৫॥

ইতি ক্তাদিপাদঃ।

## चतुर्थः पादः—इष्ण्वादिः।

### ११०६। णि भ्राज भू सह रुच चर वृध वृत प्रजनापत्रपालंकृ निराकृन्मद पत पच इष्णुर्घे।

णि—पच ५।, इष्णु १।, घे ७।।

एभ्य इष्णुः स्यात् घे। कारयिष्णुः, भ्राजिष्णुः भविष्णुः सहिष्णुः रोचिष्णुः चरिष्णुः वर्द्धिष्णुः वर्त्तिष्णुः प्रजनिष्णुः अपत्रपिष्णुः अलङ्करिष्णुः निराकरिष्णुः उन्मदिष्णुः उत्पतिष्णुः उत्पचिष्णुः।

### ११०७। ष्णुक् भू-जेः।

ष्णुक् ।१।, भू-जि ५।।

आभ्यां ष्णुक् स्यात् घे। भूष्णुः जिष्णुः।

### ११०८। ग्ला म्ला स्था क्षि पच परिमृजः स्नुः।

ग्ला—परिमृज ५।, स्नु १।।

एभ्यः स्नुः स्यात् घे। ग्लास्नुः म्लास्नुः स्थास्नुः क्षेष्णुः पक्ष्णुः परिमार्क्ष्णुः।

---

प्रात् जन प्रजन अपात् त्रप अपत्रप अलम् कृ अलङ्कृ। निर् आ निरा तस्मात् कृ निराकृ। मद च पत च पच चेति मदपतपच उदो मदपतपच उन्मदपतपच। ततो णिश्च भ्राजश्चेत्यादि तस्मात्। णिर्ण्यन्तः। भवङ्कप्रभृताधिकारात् भक्तिवयस्ताच्छील्ये इत्यस्मात् ताच्छील्यमनुवर्त्तते तस्य च स्थय अविम प्रादिति पर्य्यन्तेऽधिकार। तेन कारयितुं शीलमस्येत्यादिवाक्ये कारयिष्णुरित्यादि ॥ ११०६ ॥

भूष्णु. अत कित्त्वात् श्र्युकीति इम् न स्यात् गुणाभावश्च ॥ ११०७ ॥

## ११०९ । क्षिप त्रस गृध धृषः क्नुः ।

क्षिप—धृष' ५।, क्नु' १।।

एभ्यः क्नुः स्यात् घे । क्षिप्नुः त्रस्नुः गृध्नुः धृष्णुः ।

## १११० । शॄ स्था भू कम गम हन लष वृष पत पदो ञुकः ।

शॄ—पद' ५।, ञुक १।।

एभ्यो ञुकः स्यात् घे । शारुकः स्थायुकः भावुकः कामुकः गामुकः घातुकः लाषुकः वर्षुकः पातुकः पादुकः ।

## ११११ । भिक्ष जल्प कुट्ट लुण्टवृञः षाकः ।

भिक्ष—वृञ ५।, षाक १।।

एभ्यः षाकः स्यात् घे । भिक्षाकी जल्पाकी कुट्टाकी लुण्टाकी वराकी ।

---

ग्लास्नुरित्यादि त्रय सुगमम् । जेष्णुरिति एकाजिवर्णान्तत्वात् इमो निषेधे गुणे षत्वम् । पच्णुरिति औदित्त्वात् नेम् चुङिति कुडि षत्वम् । परिमार्ष्णुरिति मृजलूष शुद्धौ ऊदित्त्वात् अनिम् पक्षे मृजोऽकङिति वृद्धौ शक्रुाजेति षङि षढो कः से इति षस्य कत्वे क्तिलादिति षत्वम् । अस्य इम् पक्षे न प्रयोगः ॥ ११०८ ॥

क्षिप प्रजौ क्षिप्यौ क्षिप्नुः कित्त्वात् न गुणः । त्रस त्रसीण भये त्रस्नुः । गृधिषु च लिप्से गृध्नुः । ञिधृषा न प्रागल्भ्ये धृष्णुः ॥ ११०९ ॥

शृगि हिंसे ञिष्ठा स्थाने, भूस्वरूपम् । कमुङ स्पृहि । औगम् लृ गत्याम् । हनली गतौ । लष लषञ स्पृहि । वृषु सेचने । पत्लृज गत्याम् । पदौङ गतौ । एभ्यो ञुकः स्यात् घे । ञित्त्वात् वृद्धिः । स्थायुक इत्यत्र यनञ्णित् कृदिणीति यन् । घातुक इत्यत्र खेर्हो घ इति हस्य घे हनस्तङिति तङ् ॥ १११० ॥

भिक्षङ लाभादौ । जल्पवाचि । कुट्टकङ प्रतापने कुट्टक कुत्साछिदोरिति द्वयम् । लुण्टकवग्रा चौर्य्ये वङग सम्भक्तौ । एभ्यः षाकः स्यात् घे । षित्वादीपि ॥ ११११ ॥

## ११११२। पति गृहि स्पृहि शीङ आलुः।

पति—शीङ ५।, आलुः १।।

एभ्यः आलुः स्यात् घे। पतयालुः गृहयालुः स्पृहयालुः शयालुः।

## ११११३। शत सद सि धे दो रुः।

शत—द ५।, रु १।।

एभ्यो रुः स्यात् घे। शत्रुः सद्रुः सेरुः धारुः दारुः।

## ११११४। घसस्वदः क्मरः।

घस सृ अद ५।, क्मर १।।

एभ्यः क्मरः स्यात् घे। घस्मरः सृमरः अद्मरः।

## ११११५। मिद भासभन्जो घुरः।

मिद भास भन्ज ५।, घुर १।।

एभ्यो घुरः स्यात् घे। मेदुरः भासुरः भङ्गुरः।

## ११११६। छिदभिदविदः कुरः।

छिद भिद-विद ५।, कुर १।।

एभ्यः कुरः स्यात् घे। छिदुरः भिदुरः विदुरः।

---

पतत् कैश्यगत्योः। गृहत् कङ्ग्रहे। स्पृहत्कांक्षे। त्रयोऽदन्तचुरादयः। शीङलञि स्वप्ने। एभ्यः आलुः स्यात् घे। ञेर्लोप इत्यत्र आलुवर्जनात् न ञेर्लोप ॥११११२॥

शदलृञौ शातौ। षदलृञौश विषादे। सिनगञ बन्धे। धेट पाने। धेट पृथग् ग्रहणात् दा इति स्वरूपम्। तेन दाल लूनौ दाञ दाने डुदाञिनृच देङ पालने दैप शोधने दोषच्छेदे इति षण्णां ग्रहणम् एभ्यो रु स्यात् घे ॥११११३॥

सृघसौ भक्षे। सृगतौ। अदौ भक्षे। एभ्यः क्मरः स्यात् घे कित्वात् न गुण ॥११११४॥

ञिमिंदा स्नेहने। भासङ दीप्तौ। भन्जधौ मोटने। एभ्यो घुरः स्यात् घे। भन्ज धातोरनेकार्थत्वात् वक्रीभावे घुरे कृते घिति जस्य गकारे भङ्गुरं काष्ठं वक्रमित्यर्थः। यत्र परं भनक्ति तत्र तु भङ्क्ता इत्येव ॥११११५॥

## ১১১৭। জাগৃ যঙন্ত যজ জপ বদ দন্শ ঊকঃ।

জাগৃ—দন্শ ৫।, ঊক ১।।

এভ্যঃ ঊকঃ স্যাৎ ঘে। জাগরূকঃ যায়জূকঃ জঞ্জপূকঃ বাবদূকঃ দন্দশূকঃ।

## ১১১৮। যঙন্ত-চল পত সহ বহঃ কিঃ।

যঙন্ত-বহ ৫।, কি ১।।

এভ্য কিঃ স্যাৎ ঘে। চাচলিঃ পাপতিঃ সাসহিঃ বাবহিঃ।

## ১১১৯। দ্বিশ্চাদৃঙ্লোপিনঃ।

দ্বি. ১।, চ ।১। আৎ ঋ উঙ্-লোপিন ৫।।

আদন্তাৎ ঋবর্ণান্তাৎ উঙ্লোপিনশ্চ কিঃ স্যাৎ ঘে তেষাঞ্চ দ্বিত্বম্।* দদিঃ চক্রিঃ জজ্ঞিঃ।

---

ছিনত্তীতি ছিদুর। ভিনত্তীতি ভিদুর। বেত্তীতি বিদুর.। এষু কিত্বাৎ ন গুণ। ছিদ্ভিদৌ কর্ম্মকর্ত্তরীতি কেচিৎ। তন্নেয়ম্। হৃষ্টো বিপ্রচক্ষিদুর ইতি দোষান্বকার ভিদুর ইত্যাদিদর্শনাৎ ॥১১১৬॥

যজশ্চ জপশ্চ বদশ্চ দন্শ চেতি। যঙন্তশ্চাসৌ যজ জপ বদ দন্শ চেতি পশ্চাৎ জাগৃশ্চ যঙন্ত যজ জপ বদ দন্শ চেতি তস্মাৎ। জাগর্ত্তীতি জাগরূক। পুনঃ পুনরতিশয়েন বা যজতীতি যঙ্ যায়জ্য ভাগাৎ ঊকে হসাৎ লোপ ইত্যকারযকারয়োর্লোপে যায়জূক। এবং জঞ্জপ্যতে ইতি জঞ্জপূক.। বদেবাচি বাবদ্যতে ইতি বাবদূকঃ। দন্দশ্যতে ইতি দন্দশূক ॥১১১৭॥

চলজ গতৌ। পত্যঙ্ক্ষে। সহ্যকি শক্তৌ সহ মঙচ ইতি দ্বয়ম্। বহঞৌ প্রাপণে। যঙন্তেভ্য এভ্য কি স্যাৎ ঘে। পাপতিরিতি নীন বন্‌চ ইত্যত্র পতল্ট ন গত্যাম্ ইত্যস্য গ্রহণাৎ পত্যঙৈশ্যে ইত্যস্মাৎ। যঙি খের্নীনীঽপ্রাপ্তৌ ঘৌঁ নিত ইতি দীর্ঘে পাপত্যভাগাৎ কৌ হসাৎ লোপ ইত্যকারযকারয়োর্লোপ ॥১১১৮॥

আৎ চ ঋশ্চ উঙ্ লোপী চেতি তস্মাৎ। দদাতীতি দদি. কৌ দ্বিত্বে কিত্বাদ্‌ গুণে উসেঁচৌত্যাকারলোপঃ। করোতি কিরতি ইতি বয়োশ্চক্রি। জায়তে ইতি জজ্ঞি.। অত্র কৌ ক্ষতে হনগমিত্যুঙ্ লোপঃ স্তুশ্চুভিরিতি নস্য ঞকারঃ। এবং হনতৌ জঘ্নিঃ গমৌ জগ্মিঃ খনত্ব চখ্নিঃ তৃপত্ত জঘ্নিঃ ॥১১১৯॥

## ११२०। यायाय भास कस स्थेश पिश प्रमदो वरः।

यायाय—प्रमद ५।, वरः १।।

एभ्यो वरः स्यात् घे। यायावरः भास्वरः कस्वरः स्थावरः ईश्वरः पेश्वरः प्रमद्वरः।

## ११२१। क्वरप् सृ जीन्नश गमस्त मश्च।

क्वरप् ।१।, सृ जि-इन् नश गम ५।, त ।१।, म ६।, च ।१।।

एभ्यः क्वरप् स्यात् घे, मस्य च तः। सृत्वरी जित्वरी इत्वरी नश्वरी गत्वरी।

## ११२२। हिंस दीप कम्पाजस स्मिङ कम नमो रः।

हिंस—नम ५।, र १।।

एभ्यो रः स्यात् घे। हिंस्रः दीप्रः कम्प्रः अजस्रः स्मेरः कम्रः नम्रः।

---

वक्र यातीति यङि यायाय भास्टङन दीप्तौ। कसज गतौ ष्ठिा स्थाने। ईशलङ ऐश्वर्य्ये। पिश अपावयवे। प्रपूर्वमदीभिर्यङि हर्षे। एभ्यो वर स्यात् घे। यायावर इति यायाय भागात् वरे इववतेरिति इम् निषेधे हसात लोप इत्यकारलोपे य्यौर्लोप इति यलोप। ईश्वर इति वरस्य प्रत्ययत्वेन दन्त्यादित्वात् भसत्वाभावे अक्राजेति न षङ्॥ ११२०॥

सरतीति सृत्वरी कित्त्वात् गुणाभावे स्वस्य तन्निति तनि षित्त्वादीप्। एव जयतीति जित्वरी एतीति इत्वरी नश्यतीति नश्वरी। अत्र इववतेरिति इम् निषेधे प्रत्ययवकारस्य दन्त्यत्वात् भसत्वाभावे मुहादित्वात् षङ् अक्राजेति षङ् च न स्यात् गच्छतीति गत्वरी अनेन मस्य त॥ ११२१॥

हिनस्तीति हिंस्र इत्यादौ इववतेरिति इम् निषेध। एव दीप्यते इति दीप्र। कम्पते इति कम्प्र.। अजस इति नञ पूर्वजसुङ्यं मोचे। न जस्यतीति अजस्र। स्मयते इति स्मेर.। कमुकङ स्पृहि। वारे इति ञितोऽप्राप्तिपचे कम्र.। नमतीति नम्र.॥ ११२२॥

## ११२३ । सन् भिक्षाशंस उः ।

सन्-भिक्ष-आशस' ५।, उ १। ।

एभ्यो उः स्यात् घे । रिप्सुः भिक्षुः आशंसुः ।

## ११२४ । विन्दिच्छू ।

विन्दिच्छू १॥ ।

एतौ निपात्यौ । वेत्तीति विन्दुः, इच्छतीति इच्छुः ।

## ११२५ । स्वप तृष धृषो ङ्नज् ।

स्वप तृष धृष ५।, ङ्नज् ।१। ।

एभ्यो ङ्नज् स्यात् घे । स्वप्नक् तृष्णक् धृष्णक् ।

## ११२६ । शॄ वन्द आरुः ।

शॄ-वन्द ५।, आरु १। ।

आभ्यामारुः स्यात् घे । शरारुः वन्दारुः ।

## ११२७ । क्रु क्लुकौ भियः ।

क्रु क्लुकौ १॥, भिय ५। ।

भीरुः भीलुकः ।

---

रभीङ राभस्ये । रभ्[illegible]मिच्छतीति सनि मिमीमादेति खेलोपे अकारस्य इमि स्यादि सीलोप इति सलोपे भप्भसोरिति भस पले रिप्सभागात् अनेन उप्रत्यये इसात् लोप इति अकारलोपे रिप्सु । भिक्षते भिक्षु आशसते आशसु ॥११२३॥

सुगमम् ॥ ११२४ ॥

स्वपितीति स्वप्नक् । तृष्यतीति तृष्णक् धृष्णोतीति धृष्णक् इति उभयत्र इव-लतेरिति इम् निषेधे ङित्वात् न गुण. ॥ ११२५ ॥

शृणातीति शरारु । वन्दते इति वन्दारु. ॥ ११२६ ॥

भिय एतौ स्याता घे । बिभेतीति भीरुः भीलुक, उभयत्र कित्त्वात् न गुणः ॥ ११२७ ॥

## ११२८ । स्पृहि गृहि श्रु हृ जेराय्यः ।

स्पृहि—जे ५।, आय्य १।।

**एभ्यः आय्यः स्यात् घे । स्पृहयाय्यः गृहयाय्यः श्रवाय्यः हराय्यः जयाय्यः ।**

## ११२९ । गण्डि मण्डि जि जनि नन्दिभ्योऽन्तः ।

गण्डि—नन्दिभ्य' ५।। अन्त १।।

**एभ्योऽन्तः स्यात् घे । गण्डयन्तः मण्डयन्तः जयन्तः जनयन्तः नन्दयन्तः ।**

## ११३० । स्तनि गदि मदि हृदि दूषि रित्नुः ।

स्तनि—दूषि' ५।, इत्नु १।।

**एभ्यः इत्नु' स्यात् घे । स्तनयित्नुः गदयित्नुः मदयित्नुः हृदयित्नुः दूषयित्नुः ।**

---

स्पृहि गृहि स्पृहत् कोप्से । गृहत् कड ग्रहे । द्वावदन्तचुरादौ श्रुन गतौ श्रुतौ । हृड ग्रादरे । जि जये । एभ्य आय्य स्यात् घे । स्पृहयाय्यः गृहयाय्य इत्युभयत्र ञेर्लोप इत्यादौ आय्यवर्जनात् न ञेर्लोप ॥११२८॥

गडि गण्डे । किमडि भूषे । जि जये । जनीम्यङ जनौ । टुनदि समृधि अत्र जिवर्जा' सर्वे ञ्यन्ता. गण्डयन्त इत्यादिषु ञेर्लोप इत्यादौ अन्तवर्जनात् न ञेर्लोप ॥११२९॥

स्तनत्कामशब्दे । गदत्कामध्वनौ । द्वावदन्तचुरादौ । मदीभिर्यञि हर्षे अस्य गर्वे ग्लेपने वा मानुबन्धत्वात् ञौ ह्रस्वे मदि । हृन्मन । हृत्करोत्याचष्टे वा इति ञौ हृदिरिति । इदुंष्यौं वैकृते । अस्य ञौ गुणे दुषेरोदूरिति ऊकारे दूषि । एभ्य इत्नु स्यात् घे । स्तनयित्नुरित्यादिषु ञेर्लोप इत्यादौ इत्नुवर्जनात् न ञेर्लोप । अत्र त्नु इति कृतेऽपि इमा एवेष्टसिद्धौ ञेर्लोप इत्यत्र इत्नुवर्जनेऽप्य-वक्तव्ये इत्नुकरणं ज्ञापयति क्वचिद्विहितोऽपि न स्यादिति तेन वह्लिह इत्यत्र न गुणः । वातमज इत्यत्र वौ आदेशो न स्यात् ॥११३०॥

## ११३१ । कॄ-गॄ-जागृः क्विः ।

कॄ गॄ जागृ ५।, क्वि १। ।

एभ्यः क्विः स्यात् घे । कीर्विः गीर्विः जागृविः ।

## ११३२ । स्वयं शं वि सं प्राद्भुवो डुः ।

स्वय—प्रात् ५।, भुवः ५।, डुः १। ।

एभ्यो भुवो डुः स्यात् घे । स्वयम्भुः शम्भुः विभुः सम्भुः प्रभुः ।

## ११३३ । लू-ऋ-धू-खन-सू-चर-पू-सह-वह इत्रो घे ।

लू ऋ-धू-खन सू-चर-पू सह वह ५।, इत्र. १।, घे ७। ।

एभ्यः इत्रः स्यात् घे । लवित्रम् अरित्रं धवित्रं खनित्रं सवित्रं चरित्रं पवित्रं सहित्रं वहित्रम् ।

## ११३४ । घञलनटोऽघे ।

घञ् अल् अनट १।।।, अघे ७। ।

घोरेते स्युर्न तु घे । प्राकारः पादः दासः उपाध्यायः प्रासादः । समाजः, शमः कामः वामः आचामः श्रमः श्रामः यमः यामः विश्रमः विश्रामः ।

---

कॄश विक्षेपे गॄश निगरणे गॄणि शब्दे इति इय जागृच्लु जागरे । एभ्य क्वि स्यात् घे । किरतीति कीर्विः अत्र कित्वात् इववतेरिति इमौ निषेधे ऋदिरणाविति इरि व्यंनचतयोरिति दीर्घः । गिरति गृणाति वा गीर्विः । जागृविरिति जागोऽणवचीत्यत्र विवर्ज्जनात् न गुणः ॥११३१॥

एभ्य परात् भवतेर्डुः स्यात् घे । डित्वात् टिलोपः । स्वयम्भुरित्यादिः सम्भुश्च इति इय कातन्त्रसम्मतात् । एतत्पर्य्यन्तेषु ताच्छील्याधिकारः ॥११३२॥

लूञगि छिदि । ऋ प्रापे च । धूञगिञ कम्पे । खनुञ विदारे । सूङल सूतौ । चरगमनेऽदने आचारे । पूञगि शोधे । षहृकि शक्तौ सह षञ्च । वहेञौ प्रापणे । एभ्य इत्रः स्यात् करणे । लूयतेऽनेनेति लवित्रम् एवम् अरित्रं धवित्र खनित्र सवित्रं चरित्रं पवित्र सहित्र वहित्रम् ॥११३३॥

अर्थानुक्तावपि घस्य वर्ज्जनात् क्रुद्दौ कभाव इत्युक्ते कारकभावयो प्राप्तौ

## ११२५ । क-भावेऽमी ।

क भावे ७।, अमी १॥ ।

**प्रघसः वधः धरः करः निलयः समजः मयः लयः । ध्मानं मानं दानं प्रवेपनं वपनं वयनम् अजनं दरिद्राणं प्रयनम् ।**

---

धीरैते स्यु कर्त्तृभिन्नकारकेषु भावे च इत्यर्थः । घञो घकारस्वञो कगार्थः । ञकारो वृद्ध्यर्थं । यथा पाकः भाग इत्यादि । अलो लकारष्टाविभक्तोष्टकारवत् प्राचीनमतानुवादार्थः । अनटष्टकार ईवर्थं । भूष्यतेऽनयेति भूषणी । डुकञ् प्रकर्षेण क्रियतेऽसौ इति कर्मणि घञि ञित्वात् वृद्धौ प्राकारः । अस्य दीर्घविधानात् घञन्तधातौ परे क्वचिदुपसर्गस्य दीर्घं स्यादिति सूचितम् । तेन प्रासादः नीशार नीहार नीवार. व्यतीपातः परीरम्भ परीवाद प्रतीकार अतीसारः इत्यादि । करणे पद्यौङ गतौ पद्यतेऽनेनेति पादः । सम्प्रदाने दाञ दाने दास्यतेऽस्मै इति दासी विप्रः । अपादाने उपेत्य अधीयते अस्मादिति उपाध्याय । अधिकरणे प्रसीदन्ति मनांसि अस्मिन्निति प्रासाद । भावे तु समजन समाज समूह अत्र व्यजोऽरे वेत्यत्र घञवर्जनात् न वी । शमुभिर्यं शमे घञि वृद्धौ जनवध इति ह्रस्वे शम । कमुङ स्पृहि आदि इति ञिडोऽप्राप्तिपक्षे घञि वृद्धौ कमवमचमा वर्जनात् ह्रस्वाभावे काम एवं वामः आचाम । अमयमविश्रमा वा ह्रस्वे अम आम यमः यामः विश्रम विश्राम । ननु भावो भूधातोरर्थस्ततश्च सर्वधातुभ्यः कथं भावे प्रत्यया स्युरिति चेत् सत्यम् । भाव इह क्रियामात्रवाची । अतएव धात्वर्थः केवलो भाव इति । एव लभ्यस्तय क्रियासामान्यवचना इति प्राञ्च । एवञ्च अवस्थे द्वे क्रियाया स्त साध्यता सिद्धतापि च । साध्यता त्यादिवाच्या स्यात् सिद्धता द्रव्यवत् भवेत् । द्रव्यवत्त्वे घञादि स्यात् योग लिङ्गेन सङ्ख्ययेति । तेन पाक पाकौ पाका. ॥ ११२४ ॥

घञादय कर्त्तरि न स्युरित्युक्तापि अमी सर्वकारकेषु भावे च स्युरित्युक्तवता प्रयोगानुसारेण सञ्ज्ञाया क्वचित् कर्त्तर्य्यपि स्युरिति सूचितम् । घञि यथा रुजतीति रोग । उच्यतीति ओक सरति कालान्तर सार. स्थिरो भाग., अतिसरतीति अतीसारो व्याधि । अलि प्रात्तीति प्रघस । विशति चित्तं वेशः । स्पृशति देह स्पर्श । चयतीति चयो व्याधि । धरतीति धर, पर्वतभेद. ।

## ১১৩৬। ষ্ঠীবন-সীবনে বা।

ষ্ঠীবন সীবনে ১॥, বা।১।।

**এতে নিপাত্যে বা। পক্ষে ষ্ঠেবনং সেবনম্।**

---

অনটি একং বক্তীতি একবচনম্ এবং দ্বিবচনং বহুবচনম্। ক্বচিদিতি কিম্? নদতীতি নদ অত্র সংজ্ঞায়ামপি পচাদিত্বাদচ্চ্যেব। প্রঘস ইত্যাদি। অট্টৌ মচ্চে কর্ত্তর্য্যলি ঘস্লদ ইতি ঘসাদেশ। হনন বধ ভাবে অলি হনো বধাদেশ.। ধরতীতি ধর কর্ত্তর্য্যল্। ক্রিয়তেঽনেনেতি করণেঽলি কর। নিলীঃ অধিকরণেঽলি নিলয়। মিথ্যোরিত্যত্র অল্ বর্জনাৎ নঙা। স পশুনা সমূহ ভাবেঽলি ব্যঞ্জোঽরে বেত্যত্র অল্বর্জনাৎ ন বী। ডুণিঞ্ মীঞগ বধে ইতি দ্বাভ্যা ভাবেঽলি ময। মিথ্যোরিত্যত্র অল্বর্জনাৎ ন ঙা। লীগি শ্লিষি ভাবেঽলি লয়। সাম্বরূপাণা মিথ্যোরিত্যপি ভাবেঽনটি মিথ্যোরিতি ঙাদেশে মান প্রবেপনমিতি মোঽচোঽন্তরিত্যত্র বেপবর্জনাৎ ন ণলম্। অজ ক্ষেপে গতৌ ভাবেঽনটি ব্যঞ্জোঽরে ইত্যত্র বী আদেশে বয়ন পক্ষে অজনম্। দরিদ্রাতের্ভাবেঽনটি দরিদ্র আলোপ ইত্যত্র অল্বর্জনাদালোপাভাবে দরিদ্রাণ শীঙ লঞি ভাবেঽনটি শয়নম্। কারকে তু ক্রিয়তেঽনেনেতি ছেদন খড়্গ রাজভোজনা শালয়। সাধনী বন্ধনী রজ্জুরিত্যাদি॥ ১১৩৫ ॥

ষ্ঠীবন। ষ্ঠিব্যু নিরাসে সিব্যু তন্তুসন্ততৌ এতয়োর্ভাবেঽনটি দীর্ঘো বা নিপাত্যতে। পক্ষে গুণ। অত্র ষ্ঠীব নিরাসে ইতি দীর্ঘবতা এবেষ্টসিদ্ধৌ নিপাতন দীর্ঘবত. কাতন্ত্রাদ্যসম্মতত্বাৎ। বাশব্দস্য অব্যয়ত্বেন অনেকার্থত্বাৎ ইদ বিব্রণোমি। যথা ব্যুপাভ্যা শীঙ: পর্য্যায়ে ঘঞ্। তব রাজবিশায রাজোপশায। রাজ্ঞ: সম্বন্ধে শয়িতু পর্য্যায় -র্থ। উন্নিভ্যা গির। উদ্গার: নিগার। কিরতের্ধান্যে। উত্কার [illegible] ধান্যস্য। ধান্যে কিম্? পুষ্পনিকর পুষ্পোৎকর:। অত্র অলেব। বে স্তোঽশব্দে বিস্তীর্ণে। [illegible] বি[illegible]র, শব্দে তু বাক্যস্য বিস্তর.। গেরদোঽল্। প্রঘস। গে কিম্? [illegible]। নের্ণ[illegible]। নে: পরাদত্তের্ণোঽল্ চ স্যাৎ। ন্যাদ নিঘস:। প্রসম্ভ্যা মদোহর্ষেঽল্। প্রমদ [illegible]াদ। হর্ষে কিম্? প্রমাদ। অগের্য্যবজপমদে। ব্যধ জপ মদ। গেস্তু [illegible]যাধ্য. উপজাপ উন্মাদ। স্বনহসাভ্যা বা। স্বন স্বান হস হাস। গেস্তু প্রস্বান প্রহাস। যম সন্নিব্যুপেভ্যশ্চ। এভ্য পর৷ৎ কেবলাচ্চ যমোঽল্ স্যাদ্বা। সযম সযাম, নিয়ম,

## ११३७। मुण् लभोऽनेक टुः सोर्गे खल-घञोः।

मुण्।१।, लभ ६।, अन्‌एक टु-सौ ५।, खल्‌ घञी ७॥।

**केवलटुसुवर्जात्‌ गे' परस्य लभो मुण्‌ स्यात्‌ खलि घञि**

---

नियाम विषम विषाम उपयम उपयाम यम याम। लेर्गदनदपठस्वनिह सिभ्य। निगद' निगादः निनद निनाद निपठ. निपाठ निस्वनः निस्वान निहस' निहास। ले किम्‌? पाठ। अगेश्च क्वणो वीणायाम्‌। क्वण क्वाण प्रक्वण प्रक्वाण निक्वण निक्वाण। आङो रुप्लुभ्याम्‌। आरव आरावः आप्लव. आप्लाव' अवादग्रहो दृष्टिविघाते। अवग्रह अवग्राह। प्रात्‌ रज्जौ। प्रग्रह. प्रग्राह रज्जु'। परेर्भुवोऽवज्ञायाम्‌। परिभव' परिभाव। पण' परिमाणे नित्यमल्‌। पण। परिमाणे किम्‌? दास्या पाण। ग्लहोऽक्षविषये। ग्लह। सरतेर्गर्भग्रहणे गवामुपसर। अन्यत्र उपसार। अभ्युपनिविभ्यो ह्वो हुश्च। एभ्य परात्‌ ह्वयतेरल्‌ स्यात्‌ तस्य हुरादेशश्च। अभिहवः उपहव। निहव' विहव। एभ्य किम्‌? प्रह्वाय। आङो युद्धे। आह्वयन्ते योद्धारोऽस्मिन्निति आहवो युद्धम्‌। अन्यत्र तु आह्वयन्ते पानाय गावोऽत्र स आह्वावो जलाशय। अत्र घञि हुरादेशो निपात्यः। काठिन्ये हन्तेर्घनादेशश्च। दध्नो घन घन दधि इति तु अभेदात्‌। प्रादग्टहैकदेशे हनो घञ्‌ च। ग्टहैकदेशे वाच्ये प्राद्धन्तेर्घञलौ स्तो हन्तेर्घनादेशश्च। प्रघाण. प्रघण उभयत्र णत्व निपात्यम्‌। अयो विद्रुभ्यो हन्तेरल्‌ करणे घनादेशश्च। अयो हन्यतेऽनेनेति अयोघन। एव विघन द्रुघण। परेर्डश्च। परिपूर्वाद्धन्तेर्ड स्यात्‌ करणे घनादेशश्च। परिहन्यतेऽनेनेति परिघ। परे किम्‌? विघात समुद्गा गणप्रशसयोर्हन्तेर्डो घनादेशश्च। समो हन्तेर्ड स्यात्‌ गणे उदो हन्तेर्ड स्यात्‌ प्रशसायाम्‌। उभयत्र घनादेश सहनन सहन्यते ऽस्मिन्निति वा सङ्घ समूह। उत्कृष्ट हन्यते ज्ञायते इति उद्घ प्रशस्त इत्यर्थ। उपाल्क आश्रये। उपाद्धन्तेः कः स्यात्‌ आश्रये। क्विस्वाड्नगमित्युलोपे हनो ङ्नी घ्न घ्नादेश उपघ्न' आश्रय.। स्तम्बात्‌ करणे क स्तम्बो हन्यतेऽनेनेति के क्विस्वात्‌ हनगमित्युङ्‌ लोपे हनो ङ्नी घ्ने स्तम्बघ्नो दण्ड.। उद्घनान्त र्घनौ अलन्तौ निपात्यौ। ऊर्द्ध हन्यतेऽस्मिन्निति उद्घन. अन्तर्हन्यतेऽस्मिन्निति अन्तर्घनो देश

॥ ११३६॥

চ। প্রলম্ভঃ। অন্যত্র দুর্লভঃ। একেতি কিম্?, অতি-দুর্লম্ভঃ।

১১৩৮। স্যদৈধাবোদ হিমশ্রথ প্রশ্রথ স্ফারস্ফাল রাগ কায নিকায়াকায়াঃ।

স্যদ—কায়া, ১॥।

এতে ঘঞন্তা নিপাত্যন্তে। স্যদো বেগঃ। এধঃ ইধ্মম্ অবোদঃ অবক্লেদঃ। হিমশ্রথ হিমশ্রন্থনম্। প্রশ্রথঃ প্রশ্রথ-ন্থনং স্ফারঃ স্ফোরণম্। স্ফালঃস্ফোলনম্। রজ্যতেঽনেনেতি রাগঃ। কায়ো দেহঃ। নিকায়ো নিবাসঃ। আকায়শ্চিতিঃ।

১১৩৯। খনো ড ডরে কেকবকাঃ।

খন ৫।, ড ডর-ইক ইকবকা ১॥।

আখঃ আখরঃ আখনিকঃ আখনিকবকঃ।

---

একৌ অদ্বিতীয়ৌ চ তৌ দু সূ চেতি একদু.সূ ন বিদ্যতে তৌ যত্র সোঽনেকদু সু তস্মাৎ। যথা খলি অগিদুর্লভ অতিসুলম্ভ. ঘঞি প্রলম্ভ। নুণ্ধ ইত্যনে-নৈবেষ্টসিদ্ধৌ এতদ্বিধানং নিয়মার্থম্। তেন খলি দুর্লভ সুলভ। ঘঞি লাভ দুর্লাভ সুলাভ.। এষু পূর্বেণাপি নুণ্ ন স্যাৎ॥ ১১৩৭॥

স্যন্দঙবৃষ্ট স্রুতৌ স্যদো বেগ অন্যত্র স্যন্দ। ইন্ধীঞিধঙ দ্যুতৌ। এধ কাষ্ঠম্ অন্যত্র ইন্ধ। অবপূর্ব উন্দধী ক্লেদে অবোদ অবক্লেদ। অবাদন্যত্র ইন্দ প্রোন্দ। শ্রন্থগ মোচে। হিমস্য শ্রন্থন হিমশ্রথ। প্রশ্রন্থন প্রশ্রথ। অন্যত্র শ্রন্থ পরিশ্রন্থঃ। স্ফুরশি স্ফূর্ত্তৌ অন্তস্য স্ফার। কৌ জী ঙ ইত্যনেন উকা-রস্যাকারেণৈবেষ্টসিদ্ধৌ নিপাতন পক্ষে স্ফোর ইত্যনিষ্টপদনিরাসার্থম্। স্ফুল শি স্ফূর্ত্তৌ। অন্তস্য স্ফাল। স্ফল শ চালে ইত্যনেনৈবেষ্টসিদ্ধৌ নিপাতন স্ফোল ইত্যনিষ্টনিবারণার্থম্। রন্জৌঞ রাগে ভাবে করণে বা ঘঞি রাগ অন্যত্র রঙ্গ। চিন চিঞি চিত্যা কায়ো দেহ। অন্যত্র চায। এব নিকায়ো নিবাস.। অন্যত্র নিচায। আকায়শ্চিতি অত্র ককার এব নিপাতফলম্॥ ১১৩৮॥

ডস্য ডরস্য ইকস্য ইকবকস্য তে॥ ১১৩৯॥

## ११४० । व्याप्तौ भावे णिनः ।

व्याप्तौ ७, भावे ७, णिन १।।

धोर्भावे णिनः स्यात् व्याप्तौ सत्याम् । णिनान्तात् स्वार्थे ष्णः । साराविण वर्त्तते ।

## ११४१ । व्यतीहारे णन् स्त्री ।

व्यतीहारे ७, णन् ।१।, स्त्री ।१। ।

धोर्भावे णन् स्यात् व्यतीहारे, णनन्तात् स्वार्थे ष्ण', तदन्तस्य स्त्रियाम् । व्यवहारी ।

## ११४२ । ट्वितोऽथुर्भावे ।

ट्वित. ५।, अथु १।, भावे ७। ।

टुकारितो धारथुः स्यात् भावे । वेपथुः ।

## ११४३ । ड्वितस्तज्जे त्रिमक् ।

ड्वित ६।, तज्जे ७।, त्रिमक् ।१। ।

डुकारितस्त्रिमक् स्यात् ध्वर्थान्निष्पन्ने । करणाज्जातं कृत्रिमम् ।

---

सम्पूर्वरुल ध्वनौ भावे णिने णित्त्वात् वृद्धौ सराविण इति स्थिते स्वार्थे ष्णे णित्त्वे त्रिरादच इति वृद्धौ यर्योर्लोप इत्यकारलोपे साराविण इदस्य । सम्यक् शब्दो व्याप्त इत्यर्थ ॥११४०॥

णन प्रथमणकारो वृद्ध्यर्थ । शेषो दन्त्य नकारस्तु य्वोर्युमदान्ते इत्यत्र दुनीभूज्वलाद्येति विहितस्य णप्रत्ययस्य अप्राप्तये विशेषणाय । व्यवपूर्वहृञ इत्यामनेन णनि वृद्धौ व्यवहार इति स्थिते स्वार्थे ष्णे य्वोर्युम इत्यत्र णनन्तवर्जनात् यकारस्य इमोऽप्राप्तौ णित्ते त्रिरिति वृद्धौ यर्योर्लोप इत्यकारलोपे षित्वादीपि व्यवहारी। अन्योन्यव्यवहरणमित्यर्थ । एवम् अन्योन्यव्याक्रोशन व्याक्रोशीत्यादि ॥११४१॥

टुरित् यस्य स ट्वित् तस्मात् पृथग्योगात् व्यतीहारस्य स्त्री इत्यस्य च नानुवृत्ति.। टुवेप चले। वेपन वेपथु । एवं याचथुरित्यादि ॥ ११४२॥

डुरित् यस्य स ड्वित् तस्मात् । तस्मात् धात्वर्थात् जातमिति इनजनात् इति

**११४४। स्वप रक्ष यत प्रच्छ विच्छ याच यजो नङ् भावे न जिः।**

स्वप—यज ५।, नङ् ।१। भावे ७, न ।१।, जिः १। ।

एभ्यो नङ् स्यात् भावे, न च जिः। स्वप्नः रक्ष्णः यत्नः प्रश्नः विश्नः याच्ञा यज्ञः।

**११४५। किर्दोऽन्तर्गेः।**

कि १।, द ५।, अन्तर् गे ५। ।

अन्तरो गेश्च परात् दा-संज्ञकात् किः स्यात् भावे। अन्तर्द्धिः आदिः।

**११४६। ढाड्डे।**

ढात् ५।, डे ७।

ढात् परात् दः किः स्यात् डे। वारिधिः पयोनिधिः।

**११४७। क्तिः स्त्र्यघे।**

क्ति १।, स्त्री ।१।, अघे ७।

धोः क्तिः स्यात् न तु घे, तदन्तश्च स्त्रियाम्।

---

डप्रत्यये तच्च तस्मिन्। डुकृञ् विमके कित्वात् गुणाभावे कृत्रिमम्। एव डुधाञ् द्धित्रिमम्। एव डुदाञ् दत्रिममित्यादि ॥११४३॥

स्वप्नौ ञि ष्वप शये, स्वप्नः। ञि रक्ष पालने रक्ष्णः। यतीङ् यत्ने यत्नः। प्रच्छौ प्र ज्ञीप्से प्रश्न. अत्र न जिरिति निषेधात् ग्रहस्वपाद्योरिति जिर्न स्यात्। क्वौ मूटा विति छस्य शः विच्छश गतौ विश्न छस्य श। टुड् याचृञ् याचने नङि स्तुश्चुभि-रिति नस्य ञकारे अभिधानात् स्त्रीत्वे अपि याच्ञा यजी जौ यज्ञ.। रक्ष यत विच्छ याच एभ्यो इवलतेरिति इम् निषेध. ॥११४४॥

अन्तर्द्धानम् अन्तर्द्धि. कित्वात् गुणे उश्येचीति आलोप। आदिरिति। आङ्-पूर्वाणां दातु दाने इत्यादि दास्वरूपाणां कौ आदि. ॥११४५॥

डु धा ञलि धारणे। वारि धीयतेऽस्मिन् इति वारिधि.। एव पयो निधी-यतेऽस्मिन् इति पयोनिधिः ॥ ११४६ ॥

कृति: बुद्धि: मति: स्मृति: प्रज्ञप्ति: ।

[१०८२] ह्लादे: स्व: क्तौ च । प्रह्लत्ति: भूति: फुल्ति: ।

## ११४८ । कॄ गॄ ज्या ग्ला हा ल्वादेर्नि: ।

कॄ—ल्वादे ५।, नि १। ।

एभ्य: परस्या: क्ते: नि: स्यात् । कीर्णि: गीर्णि: ज्यानि: ग्लानि: हानि: लूनि: पूर्णि: ।

---

घस्य वर्ज्जनात् कर्त्तृभिन्नकारकेषु भावे च स्यादित्यर्थ: । डु कृञ् क्रियते असाविति कर्म्मणि करणमिति भावे च कृति । बुधौ ङ वेदने । बुध्यतेऽनया बोधनमिति वा बुद्धि । अत्र ढभान्तयोरिति तस्य धे झप्भसोरिति धस्य द । स्मरणं स्मृति. । ह्लादीङ मोदने क्तौ इवन्ततेरिति इमो निषेधे ह्लादे' स्व इति ह्रस्वे झप्भसोरिति दस्य ते प्रह्लत्ति. । भूयतेऽनया इति भूति सम्पत्ति: भवनमिति वा भूति । अत्र वॄदुश्वीति इम् निषेध । ञिफला विदि इवन्ततेरिति इम् निषेधे चरफलो टुरित्यकारस्य उकारे फुल्ति. ॥११४७॥

कॄश्च गॄश्च ज्याश्च ग्लाश्च हाश्च लूश्च ते, ते आदयो यस्य स तस्मात् । क्र्यादिस्थ ज्ञादिभिन्नदीर्घऋदन्ता । यथा कॄश विक्षेपे, गॄश निगरणे, जॄर्द्धयस्य च, झॄष च, तॄतरे, दॄश्भये दॄयगि विदारे, नॄश नीतौ, पॄलि पालने । दर्शते । चुरादेर्नित्य-ञन्तत्वात् ऋदन्तत्व नास्तीति । कीर्णिरिति । अनेन क्तौ स्थाने नौ कृते स्थानि-वत्त्वात् ने. कित्त्वे वॄदुश्वीति इमो निषेधे ऋदिरणाविति इरि व्यंनचतयीति दीर्घ । एव गीर्णिरित्यादि । ज्या इत्यस्य ल्वादित्वादेव प्राप्तौ पृथग् ग्रहण ज्ञापयति । ज्यादे: परस्य नि आदेशस्य स्थानिवत्त्व नास्तीति । तेनास्य कित्त्वाभावात् ज्यानिरित्यत्र न जि: । एव सज्ञाविशेषे ज्यादित्वात् क्तेर्नि आदेशे श्रोणिर्नितम्ब श्रेणि पङ्क्तिरित्यादौ गुण: । ग्लादिस्तु ग्लै क्षये ग्लानि: एव म्लै म्लानि' । हादिस्तु ओहाक्लि त्यागे हानि' । अत्र दा मा गे इत्यत्र गौरवज्ञापकात् नङी । हादे: पृथग्विधान ज्ञापयति क्ति. । स्थघे इत्यत्र अघ इति नञोऽल्पार्थत्वात् वहप्रभृते-र्नाम्नि कर्त्तरि क्तौ तस्य नि आदेशे स्थानिवत्त्वाभावात् ञेरभावे वहतीति वह्नि: एवं धग्नि: । नाम्नि किम् ? ऊढि: । ल्वादिस्तु लूञगि छिदि लूनि: अत्र वॄदुश्वीति

**११४९। साति हेति यूति जूति।**

**स्यति हिनोति यौति जवतीनाम् एते क्त्यन्ता निपात्यन्ते।**

**११५०। शी व्रज यज विद् सास मन चर भ्रटाय्येन समज निपत निसदः क्यप्।**

शी—निसद ५।, क्यप् ।१। ।

**एभ्यो भावे क्यप् स्यात् तदन्तश्च स्त्रियाम्। शय्या व्रज्या इज्या विद्या सुत्या आस्या मन्या चर्य्या भृत्या अटाट्या इत्या समज्या निपत्या निषद्या।**

---

इमो निषेध। जि पृ मिलि तु पालने वृदुश्रीति इमो निषेधे ऋदिरथाविति ऊरि व्यंनचयतीति दीर्घे पूर्णि। पूर्त्तिरिति तु पूरीषङ् पूर्त्तौ इत्यस्य। जौमरास्तु ज्वरत्वरचरहृर्छा, धुर्वीतुर्वीत्येतान् वर्ज्जयित्वा रेफान्तादपि क्तेर्निरित्याहु। तन्मते ईर मङ कम्पगत्योरित्यादेरपि ईर्णिरित्यादि ॥११४८॥

सोय नाशे निपातनात् द्री सो मा स्थामिति ङिर्न्न स्यात् हिनोतेर्गुण युल मिश्रणे जुरहसि इत्येतयोर्दीर्घ. ॥११४९॥

अत्र सूत्रे भावे इति नोक्ता वृत्तौ भावे इति व्याख्यानादत्र प्रयोगानुसारेण भावे कर्तृभिन्नकारके च स्यात्। परसूत्रेषु तु भावस्यैवानुवृत्ति कदाचित् कारकस्येति ज्ञापनार्थम्। यथा शीञलिञि स्वप्ने शेतेऽस्यामिति क्यपि शीङीङ्य्येंथाविति ङयि स्त्रीत्वादापि शय्या खट्वादि। व्रज गतौ व्रजनं व्रज्या। यजै ञौ यजन इज्या ग्रहस्वपाद्योरिति जि। विदल मतौ विदन्त्यनया इति विद्या सवन सुत्या क्यपि कित्वात् गुणाभावे स्वस्य तन्। ञिलासङ आसन आस्या। मन यौङ बोधे। मन्यतेऽस्यामिति। चरगमनेऽदने आचारे चरण चर्य्या। भृ लिटुञौ भरण भृत्या. अट गतौ यङि अटाय्यभागात् भावे क्यपि हसाल्लोप इत्यकारलोपे पुनर[illegible] यकारलोपे अटाट्या। इन गतौ एत्यनया अयन वा इत्या। अज क्षेपे गतौ समजन्त्यस्यामिति समज्या सभा। अत्र व्यजोऽरे वेत्यत्र क्यप्वर्ज्जनात् न वी। पतॢज गत्या निपतन्त्यस्यामिति निपत्या युद्धभूमि.। सदॢजौस विषादादौ। निषीदन्त्यस्यामिति निषद्या क्रयविक्रयभूमि. ॥११५०॥

## ११५१। कृः शश्च।

कृ. ५।, श १।, च ।१।।

करोतेः शः स्यात् क्यप् च भावे स च स्त्रियाम्। क्रिया, कृत्या।

## ११५२। सृ-जागुर्यः।

सृ जागु ५।, य १।।

आभ्या यः स्यात् भावे, स च स्त्रियाम्। परिसर्य्या जागर्य्या।

## ११५३। शस्त्यादः।

शस्-त्यात् ५।, अ १।।

आभ्यामः स्यात् भावे स च स्त्रियाम्। प्रशंसा दिदृत्ता आटाटा कण्डूया।

## ११५४। सेमक्तात् सरोः।

सेमक्तात् ५।, सरोः ५।।

यस्मात् क्तो विहितः सेम् स सेमक्तः, तस्मात् समतो धोः

---

डुकृञ भावे शप्रत्यये रतनोर्यगिणाविति षकि रुद्रि शयगिति ऋकारस्य रिकारे क्रिया। क्यपि तु गुणाभावे स्वस्येति तनि कृत्या। अत्र चकारेण क्तेरपि समुच्चयात् कृतिरपि। एव चकारात् मृगयतेरपि शप्रत्यये मृगया ॥११५१॥

परिसरणं परिसर्य्या, परिपूर्वस्यैव प्रयोग। जागरणं जागर्य्या ॥११५२॥

शन्स च त्यश्चेति शस्य तस्मात्। शन्सु हिंसास्तुत्यो। प्रशंसन प्रशंसा। त्य प्रत्ययान्त। दृह्शो प्रेच्छे सनि शकाजेति षकि षढो क सि इति षस्य ककारे दिदृत्तभागादनेन भावे अप्रत्यये लोपोऽत इति सनोऽकारलोपे स्त्रीत्वादापि दिदृत्ता। एव स्वार्थे सनन्तादपि चिकित्सा इत्यादि। अट गतौ यङि अटाट्य-भागादप्रत्यये हसाल्लोप इत्यकारलोपे पुनस्तथैव यकारलोपेऽपि अटाटा। कण्डू-शब्दात् क्ये कृते कण्डूयभागादप्रत्यये कण्डूया। एव पुत्रकाम्या शानीया इत्यादि। कम ऋतति ईयादौ ऋतीया गोपाया ॥११५३॥

सह इमा वर्त्तते य स सेम्। सेम् क्तो यस्मात् स सेमक्तः तस्मात्। यस्मात् धातो. परस्य क्तस्य इम् सम्भवति स सेमक्त.। सेमक्तात् गुर्वन्तवतो धातो रः

ঞ স্যাৎ ভাবে স চ স্ত্রিয়াম্। ঈহা জাগরা। সেমন্তাৎ কিম্ ?, নীতিঃ রাদ্ধিঃ। রুমতঃ কিম্ ?, পত্তিঃ।

১১৫৫। তুলেচ্ছারা তারা ধারা কারা হারা গোধা লেখা রেখা চূড়াঃ।

তুলা—চূডা ১॥।

এতে আন্তা নিপাত্যন্তে। চোদনা চূডা।

১১৫৬। ভীষি চিন্তি পূজি কথি কুম্বি চর্চ্চি স্পৃহি তোলি দোলি ষিদ্ভিদাদ্যাত্বর্‌ঘটাদের্ঙঃ।

ভীষি—আত্বর্‌ঘটাদে ৫।, ঙ ১।।

এভ্যো ভাবে ঙ স্যাৎ স চ স্ত্রিয়াম্। ভীষা চিন্তা পূজা

---

স্যাদিত্যর্থ। ঈহঙ্ চেষ্টে ঈহা জাগৃচ্ লু জাগরে। সেমন্তাৎ কিং নীঞ প্রাপণে নীতি। রাধৌ সিদ্ধৌ রাদ্ধি। রুমত কি পট গতৌ পত্তি. ॥১১৫৪॥

তুল কি উন্মিতৌ। তোলয়ত্যনয়েতি তুলা পরিমাণদণ্ড.। ইষুশ বাঞ্ছে ইচ্ছা। ঋ গতৌ আরা ক্ষুরিকা। তৄতরে তারা। ধৃঞ ধারা। গুধ্য বেষ্টে গোধা। হৃঞ হারা। কৃঞ কারা। লিখশ লেখা। লকারস্য রেফে রেখা চ চুদকাচুদি চূডা। চূডা ইতি বহুবচনাদন্যেঽপি নিপাত্যন্তে। যথা ভিদাদের্ভাবে ণক. স্ত্রী। ভেদন ভেদিকা অতএব চিকীর্ষা যস্য ভেদিকেতি ক্ষয়মুক্তম্। এবং বিশেষেণ ভীষণা বিভীষিকা। রোগাখ্যায়াম্। প্রবাহিকা প্রচ্ছর্দিকা বিচর্চ্চিকা। সংজ্ঞায়াম্ উদ্যানপুষ্পাণি ভজ্যন্তেঽস্যামিতি উদ্যানপুষ্পভঞ্জিকা ক্রীডা। ঋণার্হ-পর্য্যায়েষু চ ঋণে পায়সভোজিকা মে ধারয়সি। অর্হে ইক্ষুভক্ষিকা ভবান্ অর্হতি। পর্য্যায়ে অদ্য তব শায়িকা। এবম্ আসিকা আসনমিত্যর্থ। এবঞ্চ সমাদেঃ পদ্যতের্ভাবে ক্বিপ্ স্ত্রিয়াম্। পদৌঙ্ গতৌ সম্পৎ আপৎ বিপৎ প্রতিপৎ। এবং টুক্ষুল চ্যুতে। চবণ চ্যুৎ। প্রতিশ্রুৎ প্রতিধ্বনি. বিপাশা বিপাট্। ক্ষুধা ক্ষুৎ ইত্যাদয়ঃ॥ ১১৫৫॥

**अथा कुम्बा चर्चा स्पृहा तोला दोला पचा भिदा छिदा गुहा विदा चिपा जना पीडा सरा वसा सृजा घटा व्यथा त्वरा।**

### ११५७। आतोऽन्तः श्रन्ने।

आत' ५।, अन्तर्-श्रत् गे ५।।

**एभ्यः परादादन्तात् ङः स्यात् स च स्त्रियाम्। अन्तर्द्धा श्रद्धा, संज्ञा प्रमा।**

---

ष इत् यस्य स षित्। भिद आदिर्यस्य स भिदादि'। आत्वर् त्वरपर्य्यन्त। स आसौ घटादिश्चेति आत्वर्घटादि.। ततो भीषिश्च चिन्तिश्चेत्यादि समाहारस्तस्मात्। ञिभीलि भीत्या ञौ भीषादेश्चपचे भीषि। चिति क स्मृतौ। पूजक पूजे। कथत् क वाक्यप्रबन्धे। कुविकि स्तत्याम्। चर्च्च केङ सम। स्पृहत् क्षेप्से। तुलकि उन्मितौ। दुलक्युत् चेपे। नवैते अग्न्ता। एभ्यो ञौषि अन्यीत्यादिना प्राप्तव्यम् अन वाधित्वा अनेन ङप्रत्यये ञेर्लोपे स्त्रीत्वादापि भीषा इत्यादि। षितस्तु डुञौष पच पाके पचा। एव चिनगष चिया। स्रजलुष शुद्धौ स्रजूषकि भूषे च इति द्वयो स्रजा। लभड्वौङष लभा। चमुङ्जिश. चमा इति। भिदादेस्तु। भिदिर भिदा। छिदिर छिदा। गुहञ्ज गुहा। विदल मतौ विदा। चिपषञौ चिपा। एषु ङित्त्वात् न गुण। जनीस्यङ जनौ हनगमेत्यत्र ङवर्जनात् न लोप। पीडक पीडा अत्र अग्न्तत्वादन प्राप्तौ ङ। सृ गतौ सरा। ङे परे दृश्योरिति ण। ञौवसे निवासे वसा। रुजीश्चौ रुजा अत्र ङित्त्वात् न गुण। इत्यादिराकृतिगण सृजौ विसर्गे सृजा इत्यपि केचित्। आत्वर्घटादिस्तु। घटषमङ चेष्टने। जृश्र्षस्य ज्यानौ। त्वजि त्वजष मङ त्यागे गतौ। प्रथ षमङ ख्यातौ व्यथषमङ दुःखे। कद क्रद क्लदषङ वैक्लव्यविकलत्वयो। मद्मषङ चोदने स्रम्नङष विदारे क्रपषमङ क्रपाया स्यात्। क्नवषङ तु भये। दचषङ हिंसने। त्रपूषमिङ लज्जायाम्। प्रस्नषञ प्रसवे ततो, ञित्वर्षमङ वेगे स्यादमी आत्वर्घटा दय। घटा व्यथा इत्यादय ॥ ११५६॥

अन्तर्द्धानम् अन्तर्द्धा। एव श्रद्धा श्रदित्यव्ययम्। सज्ञायतेऽनया सज्ञा नाम। प्रमीयतेऽनया प्रमाणमिति वा प्रमा। एषु उपसेचीत्याकारलोपे स्त्रीत्वादाप् ११५७॥

## ১১৫৮। ঞী ঘি শ্রন্থি গ্রন্থি বেত্তি বন্দাসোঽনঃ।

ঞি—আস ৫।, অন ১।।

এভ্যোঽনঃ স্যাৎ স চ স্ত্রিয়াম্। কারণা ঈষণা শ্রন্থনা গ্রন্থনা বেদনা বন্দনা আসনা।

## ১১৫৯। প্রশ্নাখ্যানে ণিঃ।

প্রশ্ন—আখ্যানে ৭।, ণি ১।।

প্রশ্নে আখ্যানে চ ধোর্ণিঃ স্যাৎ স চ স্ত্রিয়াম্। কাঙ্কারি-মকার্ষীঃ সর্বাঙ্কারিমকার্ষম্।

## ১১৬০। নঞোঽন্যাক্রোশে স্ত্রী।

নঞ ৫।, অনি ।১।, আক্রোশে ৭।, স্ত্রী ।১।।

নঞঃ পরাদ্ধোরনিঃ স্যাৎ আক্রোশে, স চ স্ত্রিয়াম্। অজীবনিস্তস্য ভূয়াৎ অপ্রয়াণি।

## ১১৬১। ঈষদ্দুঃসোঃ খল্ ভাবে ঢে।

ঈষৎ দুর্ সো. ৫।, খল্ ।১।, ভাবে ৭।, ঢে ৭।।

এভ্যঃ পরাদ্ধোঃ খল্ স্যাৎ ভাবে ঢে চ। ঈষদাঢ্যম্ভবং ভবতা। দুরাঢ্যম্ভব ভবতা। ঈষৎকরঃ কটস্ত্বয়া, দুষ্করঃ সুকরঃ।

---

ডুকৃঞ্ন্ত। কারণা। ঈষুচ্ছে ঈষণা। শ্রন্থ ক্রিণ দর্ভে শ্রন্থনা। গ্রন্থ গ মোচে প্রতিহর্ষে গ্রন্থনা। বিদজ্ঞানে বেদনা। বদিঙ স্তুত্যভিবাদনয়ো বন্দনা। ঞিআসঙ উপবেশে আসনা॥ ১১৫৮॥

কৃঞদন্তুচ ণোর্ণিত্বাৎ বৃদ্ধী কারি। কেচিৎ তু প্রশ্নে আখ্যানে চ সক্তি শ ক্যপশ্চ কৃত্বা কাঙ্কারিকা কাঙ্কৃতি কাঙ্ক্রিয়া কাঙ্কৃত্যাম্ অকার্ষী সর্বাঙ্কারিকা সর্বাঙ্কৃতি সর্বাঙ্ক্রিয়া সর্বাঙ্কৃত্যাম্ অকার্ষম্ ইত্যুদাহরন্তি॥ ১১৫৯॥

জীবশ্চ প্রাণে অনি অজীবনি। যাল গতৌ অপ্রয়াণি। নীঽচ ইতি ণত্বম্। স্ত্র্যধিকারেঽপি স্ত্রীগ্রহণ স্ত্র্যধিকারনিবৃত্ত্যর্থম্॥ ১১৬০॥

এষামব্যয়ত্বাৎ খিত্কার্য্যাভাবেঽপি ঈষৎ দু.সো. পরাৎ ধাতৌ খল্বিধানা-

## ११६२। आतोऽनोऽदरिद्रः।

आत ५।, अन १।, अदरिद्र ५। ।

दरिद्रावर्जात् आदन्तादीषद्दुःसोः परात् अनः स्यात् भावे ढे च। ईषत् पानः दुष्पानः सुपानः। अदरिद्रः किम्? ईषद्दरिद्रम्।

## ११६३। दृश शास युध धृष मृषो वा।

दृश—मृष ५।, वा।१।।

ईषद्दुःसो परेभ्य एभ्योऽनः स्यात् भावे ढे च वा। सुदर्शनः सुदर्शः, दुःशासनः दुःशासः, दुर्य्योधनः दुर्य्योधः, सुधर्षणः सुधर्षः, ईषन्मर्षणः ईषन्मर्षः।

## ११६४। तादर्थ्ये चतुम्।

तादर्थ्ये ७।, चतुम्।१।।

धोश्चतुम् स्यात् तादर्थ्ये। कृष्णं द्रष्टुं याति।

---

दाढ्यादिशब्दव्यवधानेऽपि स्यात् तेन ईषदाढ्योपपदात् भवतेर्भावे खलि गुणे खित्वा-दाढ्यस्य मनि ईषदाढ्य भवम्। एव दु॰॰॰ भवम्। ईषत् क्रियतेऽसौ इति कर्म्मणि खलि ईषत्कर एव दुःखेन क्रिय॰॰ दुष्कर। ॰॰॰ क्रियतेऽसौ सुकर ॥ ११६१ ॥

ईषत् पीयतेऽसौ इति कर्म्मणि अने ईषत्पान। ॰॰॰॰॰न। ॰॰ दुर्व्वर्जनात् न षत्वम्। सुपान। अदरिद्र किम्? ईषत् दरिद्रायते इति भावे ॰खलि दरिद्र आलोपे ईषद्दरिद्रम् ॥ ११६२ ॥

सुखेन दृश्यतेऽसौ इति कर्म्मणि अने सुदर्शन. खलि सुदर्श। एव सुखेन शिष्यतेऽसौ सुशासन सुशास। एव दुःशासन दुःशास। युध्यौङ युद्धे अन्त-र्भूतण्यर्थत्वात् सकर्म्मकत्वे दुःखेन युध्यतेऽसौ इति कर्म्मणि अने दुर्य्योधन खलि दुर्य्योध धृषा कि त्वमर्षे अमर्ष इह अभिभव। सुखेन धृष्यतेऽसौ सुधर्षण सुधर्ष। मृषुज क्षान्तौ। ईषत् मृष्यतेऽसौ ईषन्मर्षण ईषन्मर्ष ॥ ११६३ ॥

स धात्वर्थ स चासौ अर्थ प्रयोजनश्चेति तदर्थ तस्य भावस्तादर्थ्य तस्मिन्।

## ११६५ क्त्वाच् वा निषेधेऽलं खलुना।

क्त्वाच् ।१।, वा ।१।, निषेधे ७।, अल ।१।, खलुना ३। ।

**निषेधार्थयोः अल खल्वोर्योगे धोः क्त्वाच् स्यात् वा भावे। अलं दत्त्वा अलंदानेन, खलुपीत्वा खलुपानेन।**

## ११६६। पूर्वकाले।

पूर्वकाले ७।।

**पूर्वस्मिन् काले स्थिताद्धोः क्त्वाच् स्यात्। विष्णुं नत्वा स्तौति।**

---

यस्य धातोरर्थं अन्यधात्वर्थस्य प्रयोजन भवति तस्मात् धातोर्भावे भविष्यत्काले चतुम् स्यादित्यर्थं। चकारोऽव्ययार्थं दृट्शौ प्रेक्षे चतुम् औदित्त्वात् इमोऽभावे वर्द्रोऽकि दिति ऋकारस्य रेफे शक्राजेति षङि तस्य टत्वे द्रष्टुम् अत्र दृशधातोरर्थं या धात्वर्थस्य प्रयोजन भवतीति दृशधातोश्चतुम्। अत्र क्रिययोरेककर्तृत्वे सत्येव चतुम् स्यात्। तेन विप्रमन्न भोक्तु निमन्त्रयते इति न स्यात् अन्नभोजनाय विप्र निमन्त्रयते इत्येव स्यात्॥ ११६४॥

चकारोऽव्ययार्थं। शीव्रज इत्यादिसूत्रस्य वृत्तौ भावपदव्याख्यानात् इत्यादौ भावस्यैवानुवृत्ति। तेन डुदाञलि दाने भावे क्त्वाचि दद्दीघ इति दतादेशे दत्त्वा पचेऽनटि सह वारणेत्यादिना तृतीया दानेन। पा पाने भावे क्त्वाचि दामागै इति ङी पीत्वा पचे पानेन॥ ११६५॥

यदा कर्त्ता क्रियाद्वय क्रियाद्वय करोति तदा परक्रियापेक्षया पूर्वस्मिन् काले वर्त्तमानात् धातोर्भावे क्त्वाच् स्यात् इत्यर्थं। तेन पक्त्वा भुङ्क्ते पक्त्वा भुक्त्वा याति। विष्णु नत्वा स्तौतीति स्तवनक्रियाया पूर्वकाले वर्त्तमानान्नमौ प्रह्वत्वे इत्यस्मात् क्त्वाचि वनतनेति मलोपे नत्वा। पूर्वकाले किं नमति च स्तौति च इत्यादौ न स्यात्। अत्र क्रियाणामेककर्तृत्वे एव क्त्वाच् स्यात्। तेन गुरौ गते शिष्यो भुङ्क्ते इत्यादौ न स्यात्। किन्तु पुत्र दृष्ट्वा सुख भवति शत्रु दृष्ट्वा दुःख भवतीत्यादौ स्थितस्य इत्यध्याहारादेककर्तृकत्वे क्त्वाच्। यद्यपि कसपतनानन्तरमेव झनत्कारो भवति तथापि झनदिति कृत्वा कस पतति इत्यादौ झनत्कारस्य पूर्वकालविवक्षया क्त्वाच् स्यात। एव मुख व्यादाय निद्रातीत्यादि॥ ११ ॥

## ११६७। न कित् स्कन्दस्यन्दः।

न ।१।, कित् ।१।, स्कन्द स्यन्द ५।।

**स्कन्त्वा स्यन्त्वा।**

## ११६८। सेमऽक्षुध कुष क्लिश गुध मृड़ मृद वद वस ग्रहः।

सेम् ।१।, अक्षुध—ग्रह ५।।

**धोः पर इम् सहितः क्त्वाच् कित् न स्यात्, न तु क्षुधादेः। शयित्वा। सेम् किम्? श्रुत्वा। क्षुधादेस्तु क्षुधित्वा।**

## १६९। तृष मृष कृष वञ्च लुञ्चृतो वा।

तृष—ऋत ५।, वा ।१।।

**एभ्यः सेम् क्त्वाच् कित् न स्यात् वा। तर्षित्वा मर्षित्वा कर्षित्वा वञ्चित्वा लुञ्चित्वा अर्त्तित्वा। पक्षे तृषित्वा इत्यादयः।**

---

आभ्या पर क्ताच् कित् न स्यात्। स्कन्दिरौ गतिशोषणयोः। क्त्वाच कित्त्वाभावात् हसुङ् इत्यनेन नलोपाभावे एकवर्गीयवर्णत्रयमध्यवर्त्तित्वात् दलोपे स्कन्त्वा। स्यन्दङवड स्रुतौ क्त्वाचि ऊदित्त्वात् इमोऽभावपक्षे स्यन्त्वा। अत्र नञा निर्दिष्टमनित्यमिति न्यायात् क्त्वाच् स्थानजातस्य यप कित्त्वे प्रस्कद्य प्रस्यद्य इत्यत्र न लोपः स्यात्॥ ११६७॥

सह इमा वर्त्तते योऽसौ स सेम्। शीङ्लञि क्त्वाच् वसोऽरस्येति इमि अनेन कित्त्वनिषेधे गुणे शयित्वा। एवम् ऋचश्च स्तुत्याम् अर्च्चित्वा इत्यादि। सेम् किम्? जित्वा श्रुत्वा ज्ञात्वा। क्षुधलृषौ क्त्वाचि क्षुधवसेति इमि क्षुधित्वा। कुषग निष्कर्षे। कुषित्वा। क्लिश्युञ चोपतापे। क्लिशूगतु विबाधे एतयो इम् पक्षे क्लिशित्वा। गुध्य वेष्टे गुधग रुषि गुधङ क्रीडे इति त्रयाणां गुधित्वा। मृडगश्च मोदे मृडित्वा मृदग क्षुदि मृदित्वा एषु कित्त्वात् न गुणः। वदे वाचि ग्रहस्वपाद्योरिति ञौ ऊदित्वा वसेश्चौ निवासे क्षुधवसेति इमि ग्रहस्वपाद्योरिति ञौ शासवसेति षत्वे ऊषित्वा। गग्रहञ च ग्रहस्वपाद्योरिति ञौ ग्रहेरिमोर्घ इति दीर्घे गृहीत्वा। क्षुध-क्लिश वस इति विभ्योऽन्येषु वसोऽरस्येति इम्॥ ११६८॥

## ११७० । थ-फात् नुङः ।

थ फात् ५।, नुङः ५। ।

नकारोङस्थान्तात् फान्ताच्च सेम् क्त्वाच् कित् न स्यात् वा । श्रन्थित्वा श्रथित्वा ग्रन्थित्वा ग्रथित्वा गुम्फित्वा गुफित्वा । नुङः किम् ? कोथित्वा रेफित्वा ।

## ११७१ । नश्-जोऽनिमः ।

नश्-ज ५।, अनिम ५। ।

नशो जान्ताच्च नुङोऽनिमः परः क्त्वाच् कित् न स्यात् वा । नष्ट्वा नंष्ट्वा, भक्त्वा भक्त्वा । अनिमः किम् ? अञ्जित्वा ।

[८१८] व्युङोऽवोहसादेरिति द्योतित्वा, द्युतित्वा लेखित्वा, लिखित्वा । रुदादेस्तु रुदित्वा विदित्वा मुषित्वा । अवः किम् ? देवित्वा । हसादेः किम् ?, एषित्वा ओषित्वा ।

---

इर्षञि तृष तृषि । क्त्वाच कित्वाभावे गुणे तर्षित्वा कित् पक्षे तृषित्वा । एवं मृषु सेचने मृष्यञङु मृष्यञ चान्तौ एषा मर्षित्वा मृषित्वा । क्रशिषं तु कार्श्ये कर्शित्वा क्रशित्वा । वन्चु गत्या वञ्चित्वा कित् पक्षे वचित्वा । एवं लुन् चापनयने लुञ्चित्वा लुचित्वा । ऋत स्पर्द्धनैश्वर्ययो अर्त्तित्वा ऋतित्वा ॥ ११६९ ॥

श्रन्थग मोक्षे श्रन्थित्वा श्रथित्वा । गुन्फश ग्रन्थे गुम्फित्वा गुफित्वा । नकारोङः किम् ? कुथ्यतु पूतित्वे कोथित्वा । रिफश्गर्फे रेफित्वा ॥ ११७० ॥

नश च ज चेति तस्मात् । नश्लृ नाशे ऊदित्वात् वेमूदिदित्यनेन इमोऽभावपक्षे नुण् रध इति नुणि कित् पक्षे हसुङ्न इति नलोपे शक्षाजेति षडि नष्ट्वा भन्जोधौ मोटने औदित्वात् इमोऽभावे न लोपे चङ्डिति जस्य गकारे झप्भसोरिति गस्य ककारे भक्त्वा । पक्षे नस्यानुस्वारे ञपेञम्नोरिति तस्य ङकारे भङ्क्त्वा । अनिम किम् ? अञ्जधञि इम् पक्षे सेमक्त्वश्रेति कित्वनिषेधे नस्यानुस्वारे तस्य ञकारे अञ्जित्वा । व्युङोऽवो हसादेरित्यस्योदाहरणमाह द्युत्लृङ द्युत्या द्युतित्वा द्योतित्वा लिखश लेखने लिखित्वा लेखित्वा । रुदादेस्तु रुदित्वा विदित्वा मुषित्वा । अवः

## ११७२। पू-क्लिशुदित इम्।

पू क्लिश उदित ५।, इम् ।१।।

एभ्यः क्ताच् इम् स्यात् वा। पवित्वा पूत्वा, क्लिशित्वा क्लिष्ट्वा, शमित्वा शान्त्वा।

## ११७३। क्रमोर्घो वा।

क्रम ६।, घं १।, वा ।१।।

क्रमित्वा क्रान्त्वा क्रन्त्वा।

## ११७४। जॄ-व्रश्चो न जिः।

जॄ व्रश्च ६।, न ।१।, जि १।।

आभ्या क्ताच् इम् स्यात् न तु व्रश्चेर्जिः। जरित्वा व्रश्चित्वा।

---

किम्? दिव्यु जिगीषादौ उदित्वेन क्ताच् वेट्त्वात् इम् पक्षे सेमक्तुधकुषेत्यादिना नित्यकित्त्वाभावे गुणे देवित्वा पक्षे द्युत्वा इति बोध्यम्। इसादि किम्? एषित्वा श्रोषित्वा। अनयोरपि वेमत्वात् इम् पक्षे कित्त्वाभावो नित्यः॥११७१॥

वृदुश्रीयनेन कितामिम् निषेधात् पूं इत्यस्याप्राप्तौ विकल्पार्थं ग्रहणम्। क्लिश्नुपञ्चोपतापे अस्य क्षमते उदित्त्वेऽपि पुनर्ग्रहणम् अन्येषा मते उदित्त्वा-भावात्। पूस्वरूपात् क्ताचोऽनेन इमि सेमक्तुधकुषेत्यादिना कित्त्वनिषेधात् गुणे पवित्वा पक्षे पूत्वा। क्लिश्नुञ क्ताच इमि सेमक्तुष्वित्यत्र क्लिशवर्जनात् गुणाभाव क्लिशित्वा पक्षे क्लिष्ट्वा। शमुभिर्ष शमे उदित्त्वादनेन इमि शमित्वा पक्षे अमुङ भसयाविति दीर्घे शान्त्वा॥११७२॥

क्रमो र्घ. स्यात् क्ताचि। क्रमु गतौ क्ताच् वेट्त्वात् इमोऽभावपक्षेऽनेन दीर्घे क्रान्त्वा पक्षे क्रन्त्वा। इम् पक्षे क्रमित्वा इति बोध्यम्॥११७३॥

विभाषाद्वयमध्यवर्त्तित्वादस्य नित्यत्वम्। जॄस्वरूपात् वृदुश्रीत्यनेन कितामिम् निषेधेऽपि अनेन इमि सेमक्तुधेत्यादिना कित्त्वनिषेधात् गुणे जरित्वा। पक्षे वृतो वेम इति दीर्घे जरीत्वा इत्यपि। जॄ इति दीर्घान्तस्य ग्रहणमिति दुर्गसिंह। जॄ

১১৭৫। হাকো হিঃ।

হাক' ৬।, হি ১।।

হিত্বা।

১১৭৬। ব্যাদনঞঃ ক্ত্বো যপ্ সে।

ব্যাৎ ৫।, অনঞ ৫।, ক্ত্ব ৫।, যপ্ ।১।, সে ৭।।

নঞ্বর্জাৎ ব্যাৎ পরাৎ ধোঃ ক্ত্বো যপ্ স্যাৎ সে সতি। প্রকর্ষেণ কৃত্বা প্রকৃত্য, প্রবত্য প্রতত্য প্রহত্য, উদজ্য, প্রদায় প্রমায় প্রগায় প্রহায় প্রপায় প্রসায় প্রস্থায়। [ ৭৫৩ ] দীঙষ্ঠ্যামিতি যপি ডা। প্রদায় [ ৭৪৫ ] মিম্যোরিতি ডা প্রমায় প্রলায় প্রলীয়।

---

ন্যক্কারে ইতি ক্রমান্তস্য গ্রহণমিত্যেকে। অশূশ্ ক্লেদে ঊদিত্ত্বেন বেমত্বেঽপি অনেন নিত্যে মি প্রশ্নিত্বা। সেম্ ক্ত্বাচ কিত্ত্বনিষেধাদেব জেরপ্রাপ্তৌ অত্র জের্নিষেধো জ্ঞাপয়তি কস্যচিদ্বিধের্নিষেধেঽপি পুন. প্রসক্তিঃ স্যাদিতি। তেন হবরতেরিতি ইম্ নিষেধেঽপি চণাদৌ ক্তে ইম্ স্যাৎ। যথা ভণিতি সঙ্কুচিতি নিকুচিতি আলোচিতি. পঠিতি গৃহীতি ক্ষিদ্বিতি উদিতি মুদিতি দীধিতিরিত্যাদি॥১১৭৪॥

হাকো হি. স্যাৎ ক্ত্বাচি। হিত্বা। হাক কিম্? ওহাঙলি গতৌ হাত্বা॥১১৭৫॥

নাস্তি নঞ্ যত্র সোঽনঞ্ তস্মাৎ। কৃঞদন্তু চ প্রকর্ষেণ কৃত্বা ইতি ব্যস্য ব্যনুকারেতি সমাসে অনেন ক্ত্বাচো যপি তস্য স্থানিবত্ত্বেন কিত্ত্বাৎ গুণাভাবে স্বস্য তনি প্রকৃত্য। বনুঙ ব্যাপৃতৌ প্রবত্য। তনদুঞ বিস্তৃতৌ প্রতত্য। হনলো প্রহত্য। এষু বননতেতি ন লোপে স্বস্য তন্। অঞ্জূঞ্জি হসুঙ্ ইতি নলোপে উদজ্য। দা ইতি স্বরূপস্য প্রদায়। মা ইতি স্বরূপস্য প্রমায়। গৈ প্রগায়। হাক প্রহায়। পা পানে প্রপায়। ষোয় নাশে প্রসায়। স্থা প্রস্থায়। এষু দামাগৈহাগিত্যত্র যপ্বর্জনাৎ ন ঙী। ওদীঙয় ক্ষয়ে দীঙষ্ঠ্যামিতি ডাদেশে প্রদায়। ডুমিঞন ক্ষেপে মীঙষতু মীঞগ বধে এষা মিম্যোরিতি ডাদেশে প্রমায়। লী ইত্যস্য লিযস্তু বেত্যনেন ডাদেশবিকল্পে প্রলায় প্রলীয়। অনঞঃ কিম্? অকৃত্বা ন কৃত্বা। সে কিম্?

११७७ । म्लोपो वा अनिमः ।

म् लोप १।, वा ।१।, अनिम ६। ।

अनिमो मस्य लोपं वा स्यात् यपि । प्रणत्य प्रणम्य । अनिमः किम् ? प्रशम्य ।

११७८ । घोर्ञेरयः ।

घो ५।, ञे ६।, अय १। ।

घुपूर्वस्य ञेरयः स्यात् यपि । विगणय्य । घोः किम् ? सम्प्रधार्य्य ।

११७९ । वापः ।

वा ।१।, आप ५। ।

आपः परस्य ञेरयं स्यात् वा यपि । प्रापय्य प्राप्य ।

११८० । वा-मेच्योर्मिच्यौ ।

वा ।१।, मे च्यो ६॥, मिच्यौ १॥ ।

मेङो मि चेः चीः स्यात् वा यपि । अपमित्य अपमाय, प्रचीय प्रचित्य ।

---

सपदि कृत्वा इति । कदाचिदनव्ययपूर्वादपि तेन स्ववन त्यज्य गच्छति । सन्ध्या-वधू ग्टह्य करेण गाढमित्यादि जौमरा ॥ ११७६ ॥

नमौ शब्दनत्यो मलोपे स्वस्य तनि प्रणत्य पक्षे प्रणम्य । एवम् औगम आगत्य आगम्य । अनिम किम् ? विक्रम्य आचम्य । निर्जित्य आहत्य विहृत्य इत्यादौ आगमा-देशयोरागमस्य बलवत्त्वादौ स्वम्य तनागमे घोंऽजय्यरे इति न स्यात् ॥ ११७७ ॥

लघोरव्यवहितपरस्य ञेरसम्भवात् हसव्यवधाने इत्यर्थं । गणत्क सख्याने । ञौ हसाल्लोप इत्यकारलोपे गणिभागात् क्वाचौ यपि अनेन ञेरयि विगणय्य एवं विघटय्य इत्यादि । घो. किम् ? सपूर्वात् धृक धृत्या ञौ धारिभागात् क्वाचौ यपि गुर्वंचरपूर्वत्वात् ञेरयाभावे ञेर्लोपे सम्प्रधार्य्य । एव प्रपाठ्य प्रभाव्य इत्यादि ॥ ११७८ ॥

प्रापय्य प्राप्य । अत्र गुरुपूर्वत्वात् अप्राप्तौ विभाषा ॥ ११७९ ॥

## ११८१ । न वे-ज्या-व्यो जिः ।

न ।१।, वे ज्या—व्य ६।, जि १।।

एषां जिर्नः स्यात् यपि । प्रवाय प्रज्याय प्रव्याय ।

## ११८२ । संपरि-व्यो वा ।

सम्-परि-व्य ६।, वा ।१।।

आभ्यां व्येञोजिर्वा स्यात् यपि, संवीय संव्याय, परिवीय परिव्याय ।

## ११८३ । चणम् वाभीक्ष्ण्ये पूर्वकाले ।

चणम् ।१।, वा ।१।, आभीक्ष्ण्ये ७।, पूर्वकाले ७।।

धोः पूर्वकाले चणम् वा स्यात् पौनःपुन्ये । स्मृत्वा स्मृत्वा नमसि, स्मारं स्मारं नमसि ।

क्तो ये यत्र विहितास्तत्र नूनं भवन्ति ते ।
क्त्वोः कभाव इत्युक्तेरन्यत्रापि प्रयोगतः ॥

तथाच ।

कृत्तद्धितसमासानामभिधानं नियामकम् ।
लक्षणं त्वनभिज्ञाना तदभिज्ञानसूचकम् ॥

---

मेङ प्रतिदाने क्त्वाचौ यपि अनेन मि आदेशे स्तस्य तनि अपमित्य । पक्षे एचो-ऽशित्या अपमाय । चिस्वरूपात् क्त्वाचौ यपि दीर्घान्तादेशे प्रचीय पक्षे स्तस्य तनि प्रचित्य । पुनर्वाग्रहण परतो वाधिकारनिवृत्त्यर्थम् ॥ ११८० ॥

वेञ्वे स्युतौ ज्यागि जरायां व्येञ् वृतौ एषां ग्रहस्वपाद्योरिति प्राप्तौ जिर्न स्यात् यपि ॥ ११८१ ॥

सम्परिपूर्वस्य व्येञ् वृतावित्यस्य जिर्वा स्यात् यपि । सवीय परिवीय । उभयत्र जौ कृते जीर्घोऽन्त्य इति दीर्घं । सम्परिपूर्वस्य किम् ? प्रव्याय प्रतिव्याय ॥११८२॥

अभीक्ष्ण मुहुरर्थमव्यय तस्य भाव आभीक्ष्ण्यम् । अत्रापि क्रिययोरेककर्तृकत्वे सतीति बोध्यम् । स्मृ स्मृतौ चणम् णित्त्वात् वृद्धौ स्मारं स्मारं आभीक्ष्ण्ये पूर्व-

वक्तव्यात् डित्वम्। चित्त्वादव्ययम्। पचे स्मृत्वा स्मृत्वा। अत्र वाशब्दस्य व्यवस्था वाचित्वात् कुचित् पौनःपुन्याभावेऽपि णमम् स्यात्। तदेवाह विभ्रणोमि। अग्र प्रथमपूर्वेभ्यो धौश्णम् वा। अग्रे भोजं व्रजति अग्रे भुंक्त्वा व्रजति। एवं प्रथमं पूर्वम्। कर्मणः क्रञश्णम्। खणमाक्रोशे। चौरं कारमाक्रोशति। खित्त्वात् मन्। णित्त्वात् वृद्धि। चौरं कृत्वा आक्रोशतीत्यर्थः। आक्रोशे किम्? साधुं कृत्वा स्तौति। स्वार्थात् क्रञः। स्वादुङ्कारं भुङ्क्ते। सुरसङ्कारं भुङ्क्ते। कथङ्कारं भुङ्क्ते। दीर्घात् नेष्यते। स्वादूकृत्य अवीकारी दीर्घः। स्वाद्वीं कृत्वा यवागूं भुङ्क्ते। कथमित्थमेवमन्यथाभ्यः क्रञश्णम्। कथङ्कारं भुङ्क्ते। इत्थङ्कारम्। एवङ्कारम्। अन्यथाकारम्। यथातथाभ्यामचमोत्तरे। यथाकारं तथाकारम्। अहम् भोक्ष्ये तवानेन किम्। अचमोत्तरे किम्? यथा कृत्वा अहं भोक्ष्ये तथा कृत्वा अहं द्रक्ष्यामि। दृशविदिभ्यां साकल्ये। कन्यादर्शं वृणोति या या कन्यां पश्यति तां तां सर्वां वृणोतीत्यर्थः। विप्रवेदं भोजयति यं यं विप्रं वेत्ति विन्दति वा तं तं भोजयतीत्यर्थः। साकल्ये किम्? किञ्चिद्विप्रं दृष्ट्वा भोजयति। यावतो जीवविन्दात्। यावज्जीवमधीते यावज्जीवति तावदधीते इत्यर्थः। यावत् वेदं भुङ्क्ते यावन्तं विन्दति तावन्तं भुङ्क्ते इत्यर्थः। चर्म्मोदराभ्यां पूरेः। चर्म्मपूरं ददाति। उदरपूरं भुङ्क्ते उदरं पूरयित्वा भुङ्क्ते इत्यर्थः। वर्षप्रमाणे ऊकार-लोपश्च वा। गोष्पदप्रं गोष्पदपूरं वृष्टो देवः गोष्पदं पूरयित्वा ववर्षेत्यर्थः। वस्त्रार्थात् क्नोपेः। वस्त्रार्थात् परात् अन्तक्नुयधातोश्णम् स्यात् वर्षप्रमाणे। वस्त्रक्नोपं चेलक्नोपं वृष्टो देवः वस्त्रम् आर्द्रं कृत्वा वृष्ट इत्यर्थः। निमूल समूलाभ्यां गताच्च कषः। निमूलकाषं समूलकाषं कषति समूलं कषतीत्यर्थः। यत्र गतार्थात् णमम् स्यात् तत्र तद्धातुरनुप्रयुज्यते। गता-र्थादिति किम्? चेलक्नोपं वृष्टो देवः। समूलात् गतार्थहन्तेः। समूल-घातं हन्ति समूलं हन्तीत्यर्थः। शुष्कचूर्णरूचाद्गतार्थपिषः। शुष्कपेषं पिनष्टि शुष्कं पिनष्टीत्यर्थः। एवं चूर्णपेषम्। रूचपेषम्। जीवाद्गतार्थग्रहः। जीवग्राहं गृह्णाति जीवं गृह्णातीत्यर्थः। अकृताद्गतार्थे कञः अकृतकारं करोति अकृतं करोतीत्यर्थः। करणाद्गतार्थहन्तेः। पादघातं भूमिं हन्ति पादेन भूमिं हन्तीत्यर्थः। हस्तार्थकरणाद्गतार्थग्रहवर्त्तिवृतः। हस्तग्राहं गृह्णाति हस्तेन गृह्णातीत्यर्थः। हस्तवर्त्तं वर्त्तयति हस्तेन वर्त्तयतीत्यर्थः। करवर्त्तं वर्त्तते करेण वर्त्तते इत्यर्थः। आत्मा-त्मीयबन्धुवित्तवाचकात् करणाद्गतार्थपुषः। स्वपोषं पुष्णाति स्वेन पुष्णातीत्यर्थः। एवं

आत्मपोषं आत्मीयपोषं ज्ञातिपोषं बन्धुपोषं धनपोषम्। स्नेहनात् करणाद्गतार्थे पिषः। स्निह्यतेऽनेनेति स्नेहनं जलादि। उदकपेषं पिनष्टि उदकेन पिनष्टीत्यर्थः। एवं तैलपेषं घृतपेषम्। आधाराद्गतार्थबन्धः। चक्रबन्धं बद्ध चक्रे बद्ध इत्यर्थः। मुष्टिबन्धं बद्ध मुष्टौ बद्ध इत्यर्थः। सञ्ज्ञायाञ्च। क्रौञ्चबन्धनं बद्ध। एवं मयूरिकाबन्धं बद्ध इत्यादि। बन्धनविशेषाणामियं सञ्ज्ञा। कर्त्तुर्जीवपुरुषाद्गतार्थनश्यवहः क्रमात्। जीवनाशं नष्टः जीवो नष्ट इत्यर्थः। पुरुषवाहं वहति पुरुषो भूत्वा वहतीत्यर्थः। विद्युत्प्रणाशम्। अयं निपात्यते। विद्युत्प्रणाशं नश्यति विद्युदिव नश्यतीत्यर्थः। ऊर्द्धाद्गतार्थशुषिपूरेः। ऊर्द्धात् कर्त्तुः पराभ्यां गतार्थशुषिपूरिभ्यां घणम् स्यात्। ऊर्द्धशोषं शुष्कः। ऊर्द्धपूरं पूर्णः। तृतीयान्ताद्युपपदेन घणमन्तस्य समासो वा वक्तव्यः। तृतीयान्तपदादुपदंशेः। तृतीयान्तपदादुपदंशेर्घणम् स्यात्। तृतीयान्तेन समासश्च वा। मूलकेनोपदंशं भुङ्क्ते। हिंसार्थाच्चैककर्म्मकात्। तृतीयान्तादिपदाद्धिंसार्थधातोश्चानुप्रयोगेण सहैककर्म्मकात् घणम् स्यात्। तेन समासश्च वा। दण्डेनोपघातं दण्डोपघातं गाश्चालयति। केशेषु केशैर्वा ग्राहं युध्यन्ते केशग्राहं युध्यन्ते। पार्श्वयोः पार्श्वाभ्यां वा उपपीडं शेते। मुष्टिपीडं दधाने इति भट्टिः। एवं पाण्युपकर्षं भक्षयति पाणिना उपकृष्य जनो भक्षयतीत्यर्थः। अपादानाद्धातोश्चणम्। त्वरायां समासश्च वा। शय्याया उत्थानं शय्योत्थायं धावति। द्वितीयान्ताद्धातोश्चणम् समासश्च वा। लोष्टं ग्राहं लोष्टग्राहं युध्यन्ते। स्वाङ्गाच्चाध्रुवाद्धातोश्चणम् समासश्च वा। यस्मिन्नङ्गे छिन्ने प्राणी न म्रियते तत् अध्रुवम्। भ्रुवौ विक्षेपं भ्रूविक्षेपं वक्ति। अध्रुवादिति किम्? शिर उत्क्षिप्य कथयति। परिपीड्यमानस्वाङ्गाद्धातोश्चणम् समासश्च वा। उरांसि परिपेषम् उरःपरिपेषं युध्यन्ते कृतस्ससुर पीडयित्वा युध्यन्ते इत्यर्थः। उरो विदारं प्रतिचस्करे नखैरिति माघः। उपपदवीप्साया धोश्चणम् स्यात् समासश्च। शिलाया शिलायामुपविश्य शिलोपवेशं लता लतामनुपात्य लतानुपातम्। नदीं नदीमवस्कन्द्य नद्यवस्कन्दमिति। नाम्न आदिशग्रहः समासश्च वा। नामान्यादिश्य नामादेशं ददाति एवं नामानिग्राहं नामग्राहं आह्वयति। तसन्तस्वाङ्गात् धोश्चणम्। क्त्वाचौ समासश्च वा। मुखतःकारं मुखतःकृत्य मुखतःकृत्वा आस्ते। तसन्तत्वेनाव्ययत्वात् क्त्वाचो यप्। तसन्तस्वाङ्गात्तु णीसश्च भुवश्चणम् क्त्वाचौ समासश्च वा। मुखतोभावं मुखतोभूय मुखतोभूत्वा आस्ते। एवं तूष्णीम्भावं तूष्णीभूय तूष्णीम्भूत्वा। एवञ्च प्रयोगानुसारात् धातुविशेषेभ्यः अर्थविशेषेषु प्रत्ययविशेषान्

## ११८४ । बहुलं ब्रह्मणि ।

बहुल १।, ब्रह्मणि ७। ।

यत् इह लौकिकप्रयोगव्युत्पत्तये लक्षणमुक्तं तत् वैदिक-प्रयोगव्युत्पत्तौ बहुलं ज्ञेयम्। क्वचित् विहितं न स्यात्। [१] क्वचित् निषिद्धं स्यात् [२]। क्वचित् वा स्यात्। क्वचित् ततो-ऽन्यत्रापि इत्यर्थः। यथा पूर्वेभिः [१] ब्राह्मणाम् [२] इत्यादौ वेदसिद्धेः।

ब्रह्मशब्दोऽत्र मङ्गलार्थः ।

इति उणादि पादः ।

इति कृदन्ताध्याय ।

समाप्तम् ।

---

कृत्वाऽन्येऽपि साधुशब्दा व्युत्पाद्या.। यथा उणिकृते करोतीति कारुः। वातीति वायु । भातीति भवान्। बिभेत्यस्मादिति मे कृते भीमभीष्मौ निपात्यौ। एवं धातुभावाद्भावे इ । यथा भवन भवि. त्यजन त्यजि नर्त्तन नृति । अत्र किम् ? नोदन नुदि. दर्शन दृशिरित्यादि। धातौ. स्वरूपकथने तिप्। यथा भवति अत्ति दीव्यति । एवं स्वरूपकथने इर्बुवादेर्न च गुणः । भवि ग्रहि रञ्जि । ब्रुवादेस्तु ब्रुवि युजि' मुहि' सिचि दुहि' दृशिरित्यादि। अतएव नाम च धातुज-माह निरुक्ते व्याकरणे शकटस्य च तोकम्। यन्न पदार्थविशेषसमुत्थ प्रत्ययतः प्रकृतेश्च हि तदूह्यमिति प्राच्चः।

कृतो ये यत्रेति—

ये कृत यत्र येष्वर्थेषु विहितास्ते तत्र तेषु नून निश्चित भवन्ति। प्रयोगत महाकविप्रयोगानुसारेण अन्यत्रापि स्यु । तत्र हेतुमाह। क्वचो कभाव इति वचनात्। उदाहरणं तत्रैव द्रष्टव्यम्। न केवलमहमेव ब्रवीमि प्राञ्चो-ऽप्येवमाहु इत्यत आह कृत्तद्धितसमासानामिति ॥११८३॥

बहुलमिति। बहव प्रकारा सन्त्यस्येति बहुल चूडादित्वात् ल.। अथवा बहून् अर्थान् लाति गृह्णाति बहुलम् ॥११८४॥

मुग्धबोध पठन-प्रयोजनम्।

गीर्वाणवाणीवदनं मुकुन्द-
सङ्कीर्त्तनञ्चेत्युभयं हि लोके।
सुदुर्लभ तच्च न मुग्धबोधा-
न्नलभ्यतेऽतः पठनीयमेतत्॥

---

ग्रन्थकृत् परिचय.।

विद्वद्धनेश्वरच्छात्रो भिषक्केशवनन्दनः।
वोपदेवश्चकारेद विप्रो वेदपदास्पदम्॥

---

वोपदेव प्रशंसा।

यौर्वाचस्पतिनेव, पन्नगपुरी शेषाहिनेवाभवत्
येनैकेन विदुष्मती वसुमती मुख्येन सङ्ख्यावताम्।
सोऽय व्याकरणार्णवैकतरणिश्चातुर्य्यचिन्तामणि-
र्जीयात् कोविदगर्वपर्वतपविः श्रीवोपदेवः कविः॥

---

ग्रन्थोत्कर्ष ख्यापयन्नाह गीर्वाणेत्यादि। गीर्वाणवाणीवदन सस्कृतकथन मुकुन्दसकीर्त्तनञ्च इत्युभयमेव लोके सुदुर्लभ भवति। तच्च उभय न मुग्धबोधात् मुग्धबोधभिन्नग्रन्थात् न लभ्यते अतो हेतो एतत् पठनीयम्। नानादेशीय-शिष्यपरम्परया नामोत्कीर्त्तनयशोवर्द्धनार्थ गुरोः पितुरात्मनश्च नाम निर्दिशति। वोपदेव विद्वद्धनेश्वरेत्यादि। उ. शिव च विष्णु उश्च अश्च वौ वयोरुपसमीपे दीव्य-तीति इदानी तत् शिष्यसत्कीर्त्तिं वर्द्धयन् श्लोकद्वयमाह यौर्वाचस्पतिनेत्यादि॥

दुर्गादासो व्यरचयदिमा मुग्धबोधस्य टीका,
नानाविद्वन्मतविलसितामाशुबोधा सुबोधाम्।
आलोकन्तामपिशुनबुधा स्तूयमाना. स्वभावात्
दोष त्यक्त्वा लवमपि गुण भूरिवद्भावयन्तु॥

इति श्रीदुर्गादासविद्यावागीशविरचिताया
मुग्धबोधस्य टीकाया कृदन्ताध्याय.।

---

सम्पूर्णोऽयं ग्रन्थः।

# सूचीपत्राणि ।

## सूत्रसूची ।

## संज्ञा-सूची ।

# आगम सूची ।

---

# स्त्रीत्व-सूची।



---

# तद्धित-सूची।

---

## स्वाद्य समासान्त तद्धित-कृदन्तेतर प्रत्यय—(धात्ववयव)—सूची ।



---